॥ ३ ॥ षट्कसप्तकयो[54]र्मध्येऽष्टावतिपादनिचृत् ॥ ११ ॥

षडक्षरसप्ताक्षरयोर्मध्ये यत्राष्टाक्षरः पादः स्यात् साऽतिपादनिचृत्। यथा—

प्रेष्ठं वो अतिथिं
स्तुषे मित्रमिव प्रियम्।
अग्निं रथं न वेद्यम् ॥ (RV. VIII 84. 1) इति,

तथा—

प्रेष्ठमु प्रियाणां
स्तुह्यासावातिथिम्।
अग्निं रथानां यमम् ॥ (RV. VIII. 103 10) इति च।

अथ किमिदं वचनगौरवम् 'षट्कसप्तकयोर्मध्ये अष्टावतिपादनिचृत्' इति? षट्काष्टकसप्तका अतिपादनिचृदित्युक्तेऽपि निर्देश[55]प्रमाद् क्रमः प्रतीयते। सत्यम्।[56] [13] एवं तर्हि[57] सूचयति— अविवक्षितोऽत्र निर्देशक्रम इति।[58] तथा वक्ष्यामः 'तृतीयं द्विपाज्जागतगायत्राभ्याम्' (P. 3/16) इत्यादिषु ॥[59]

॥ ३ ॥ द्वौ नवकौ षट्कश्च[60] नागी ॥ १२ ॥

द्वौ नवाक्षरौ पादौ एकः षडक्षरश्च स्यात् सा नागी नाम गायत्री। यथा—

ययोरिदं विश्वमेजति
तौ विद्वांसा हवामहे वाम्।
वीतं सोम्यं मधु ॥ इति वार्ष्यगण्यानाम्।[61] अस्मिन् सूत्रे
उत्तरोत्तरस्मिंश्च निर्देशक्रमो विवक्षितः 'विपरीता वाराही' (3/13) इत्यादिलिङ्गात् ॥

॥ ३ ॥ विपरीता वाराही ॥ १३ ॥

षट्कः प्रथमः अन्त्यौ[62] नवकौ इति पूर्वविपरीता[63] वाराही नाम गायत्री।[64] यथा—

वीतं स्तुके स्तुके
युवमस्मासु नियच्छतम्।
प्र प्र यज्ञपतिं तिरतम् ॥ (TA III. 11. 20) इति।

'प्र यज्ञपतिं तिर' इति पाठे नोदाहरणम् ॥

(54) A : सप्तषट्कयोर्मध्ये (55) M विनिर्देश (56): M; adds इदम् (57) A : अपि त्विदमेव (58-59) A omits. (60) M adds सा (61) A & S; वार्ष्यगण्यानि (62) M & S : अन्त्यौ (63) M : पूर्वविपरीतौ (64) M omits गायत्री

|| ३ || षट्कसप्तकाष्टकैश्च[65] वर्धमाना || १४ ||

एभिर्यदि वर्धमाना नाम गायत्री । यथा—

ईशाना वार्याणां
क्षयन्तीश्चर्षणीनाम् ।
अपो याचामि भेषजम् ॥[66] (RV. X 9 5) इति ।
त्वमसि प्रशस्यो
विदथेषु सहन्त्यः ।
अग्ने रथीरध्वराणाम् ॥ (RV. VIII. 11. 2 ) इति च ।

'त्वमग्ने यज्ञानाम्' (RV. VI 16. 1[a]) इति च बह्वृचानाम्[67] ( R Pr. XVI. 24, 25) ॥

|| ३ || विपरीता प्रतिष्ठा || १५ ||

अष्टकसप्तकषट्का[68] इति पूर्वविपरीता[69] प्रतिष्ठा नाम गायत्री । यथा—

आपः पृणीत भेषजं
वरूथं तन्वे मम ।
ज्योक् च सूर्यं दृशे ॥[70] (RV I. 23. 21) इति,

'त्वमग्ने व्रतपा असि' (RV. VIII. 11 1[a]) इति च ।

देवस्त्वा सविता मधु
प्रास्तां विश्वचर्षणीम् ।
स्यस्येव नश्वरः ॥ इति आह्वारशाखायाम् ॥

|| ३ || तृतीयं द्विपाज्जागतगायत्राभ्याम् || १६ ||

क्वचिदित्यनुवर्तते । 'तृतीयम्' इति 'गायत्र्या वसवः' (3/3) इति निर्देशापेक्षं विराट्छन्द [14]-सो ग्रहणम् । विराट् क्वचिद् द्विपाद्भवति द्वादशाक्षराष्टाक्षराभ्याम्[71] । यथा—

रायस्कामो वज्रहस्तं सुदक्षिणम् ।
पुत्रो न पितरं हुवे ॥ (RV. VII. 32 3) इति ।

'ते[72] नो अर्वन्तो हवनश्रुतो हवम्' (VS.IX.17[a]) इत्यध्वर्युशाखायाम् ।[73] 'गावो न यूथमुप यन्ति वध्रयः' (RV. VIII. 46. 30[a]) इति, 'इन्दुरिन्द्राय तोशते नि तोशते'[74] (RV. IX. 109 22[a]) इति च । 'बभ्रुरेको विषुणः'[75] (RV. VIII. 29. 1[a]) इति च सूक्तम् ।

(65) A . सप्तषट्काष्टकैर्वर्धमाना (66) A omits this illustration (67) A & S omit बह्वृचानाम् (68) M : षट्कैश्च (69) M : पूर्वविपरीतो (70) A & S drop this illustration (71) A adds पादाभ्याम् (72-73) A omits (74) All the Mss leave out नि तोशते (75) M & S quote the whole ṛk

निर्देशक्रमस्याविवक्षितत्वाद्गायत्रजागताभ्यामपि स्यात्। यथा—'अग्ने त्वं नो अन्तम' (RV. V. 24. 1ᵃ) इति सूक्तम्, 'आ याहि वनसा सह' (RV. X 172. 1ᵃ) इति सूक्तञ्च। 'अनुष्टुबार्षं तृतीयम्'[76] (P. B. IV. 8. 9) इति निर्देशोपपत्तेः। 'अनुष्टुबेषा द्विपदा पंक्तिरेव' (NS) इति छन्दोगाः।

क्वचित्त्रैष्टुभगायत्राभ्याम्। यथा—'इमा नु कं भुवना सीषधाम' (RV. X. 157. 1ᵃ) इति। क्वचित्त्रैष्टुभजागताभ्याम्। यथा—'त्रिर्नु पुरुः सुभृतो दुरोणे' (RV. VIII. 19. 27ᵃ) इति। क्वचिन्नवकचतुर्दशाभ्याम् जगती द्विपदा। यथा—'शं पदं मघं रयीषिणे' (SV. I. 441ᵃ) इति साम-योनिषु। क्वचिद्[77] षट्कपञ्चदशकाभ्यां जगत्येव। यथा—'प्र व इन्द्राय वृत्रहन्तमाय' (SV. V. 446) इति। क्वचिद्[78] षट्कदशकाभ्यां गायत्री—'विश्वस्य प्र स्तोभ' (SV. I. 450ᵃ.) इति सामयोनिष्वेव।

क्वचिज्जागतवैराजाभ्यां जगती वा विराड् वा—'तिग्ममेको बिभर्ति हस्त आयुधम्' (RV. VIII. 29. 5ᵃ) इति। क्वचिद्वैराजत्रैष्टुभाभ्यां विराड् वा त्रिष्टुब्वा—'यज्ञश्च नस्तन्वश्च प्रजाश्च' (RV. X 157. 2ᵃ) इति द्वे। 'प्रिया वो नाम हुवे तुराणाम्' (RV. VII. 56. 10ᵃ) इति, 'कदा भुवं देवहितं सनेम' (RV. VI. 17. 15ᵃ) इति च। यत्र[79] पुनर्द्विरेकपदा एतेषु चतुर्षु छन्दस्सु न युज्यन्ते, तच्छन्दोऽन्तरमेव[80]। न च[81] कृत्स्नपादार्थसमाप्तोदकम्। यथा—'नूनमग्ने त्वे वयं' (RV. VIII. 46. 15ᵃ) इति।[82]

॥ २ ॥ त्रिपात्त्रैष्टुभैः ॥ १७ ॥

तृतीयमित्यनुवर्तते क्वचिदिति च। त्रैष्टुभैः पादैः[83] क्वचिद्विराड् त्रिपदा भवति। यथा—'अग्निं नरो दीधितिभिररण्योः' (RV. VII. 1. 1ᵃ) इति। तथा 'पयः पृथिव्यां पय ओषधीषु' (TS. IV. 7. 12. 2ᵃ) इति,[84] 'आ-[15]-मित्र'द्विषगतः प्रतिष्ठाम्' (Ā. Śr. V. 2. 1ᵃ., TB. I. 2. 1. 4ᵃ) इति च। अनुष्टुब् वा.सो[85] ॥

॥ २ ॥ उष्णिग्गायत्रौ जागतश्च ॥ १८ ॥

गायत्रौ द्वौ जागतश्चैक उष्णिक्छन्दो भवति। अत्र विशेषः[86]—

॥ २ ॥ ककुम्मध्ये चेदन्त्यः ॥ १९ ॥

योऽन्त्यस्त्र्यो[87] जागतः पादः स गायत्रयोर्मध्ये चेत्[88] सा ककुब्नामोष्णिक्। यथा—'प्र सो अग्ने तवोतिभिः' (RV. VIII. 19. 30ᵃ) इति। सामयोनिषु च 'प्र मंहिष्ठाय गायत' (SV. I. 107ᵃ) 'अभ्राम्नो जना स्वर' (SV. I. 399ᵃ) इत्यादयः ॥

(76) M : अरभ्यो वि तृतीयम (77) M adds द्विपदा (78) M adds सामयोनिषु (79) A : य (79-80) S omits (81) A : तत्र (79-82) M omits (83) A drops पादैः (84) M drops इति (85) A omits this sentence. (86) A & S drop this sentence. (87) A : योऽन्त्यस्त्र्येन विशिष्टः ; M : यो ह्यन्त्यः (88) M adds स्यात्

## ॥ ३ ॥ पुर उष्णिक् पुरतः ॥ २० ॥

पुरतश्चेज्जागतः पादः[89] सा पुर उष्णिक्। यथा—

अप्स्वन्तरमृतमप्सु भेषजम्
अपामुत प्रशस्तये ।
देवा भवत वाजिनः ॥ (RV. I. 23 19.)[90] इति ॥

## ॥ ३ ॥ परोष्णिक् परतः ॥ २१ ॥

परतः उपरिष्टाच्चेज्जागतः पादः सा परोष्णिक्[91] । यथा—[92] 'अग्ने वाजस्य गोमतः' (RV. I. 79. $4^{a}$.) इति, '[93]त्वामग्ने मनीषिणः' (RV. III. 10.$1^{a}$) इति 'आ मित्रे वरुणे वयम्' (RV. V. 72. $1^{a}$) इत्यादीनि च सूक्तानि।[94] सामयोनिषु च—'पुरु त्वा दाशवान् (=दाशिवान्) वोचे' (SV. I. $97^{a}$.) 'इन्द्रमच्छ सुता इमे' (SV I. $566^{a}$) इत्यादयः ॥

## ॥ ३ ॥ चतुष्पादृषिभिः ॥ २२ ॥

सप्तकैः[95] पादैः चतुष्पादुष्णिग् भवति । यथा—'नदं व ओदतीनाम्' (RV. VIII. 69. $2^{a}$.)[96] इति, 'मंहीमहि त्वा वयम्' (RV. X. 26. $4^{a}$.) इति च ।

कथं पुनः—'प्र प्र वस्त्रिष्टुभमिषं' (RV. VIII. 69. $1^{a}$), 'अर्चत प्रार्चत' (VIII. 69. $8^{a}$) 'यो व्यतीँरफाणयत्' (VIII. 69. $13^{a}$.) इति तृचामनुक्रम्य प्रगाथाऽनुष्टुभः शंसति'[97] (AiBr. XVI. 4 7.) इति ब्राह्मणम् । तेषु हि नदं व ओ-[16] दतीनाम्' इति पठ्यते । पादसाम्यादयं गुणवाद' । तथा च रहस्यब्राह्मणे दर्शितम्—'नदं व ओदतीनामित्युष्णिगक्षरैर्भवेदनुष्टुप्पादैः' (AiĀr. I. 3. 8) इति ॥ (vide Ṛ. Pr. XVI. 32.)

## ॥ ३ ॥ अनुष्टुब्गायत्रैः ॥ २३ ॥

चतुष्पादित्यनुवर्तते । अनुष्टुबष्टकै[98]श्चतुष्पदा भवति । यथा—'त्र्यम्बकं यजामहे' (RV. VII. 59. $12^{a}$.) इति, 'गायन्ति त्वा गायत्रिण' (RV. I. 10. $1^{a}$.) इत्यादीनि च सूक्तानि । सामयोनिषु च—'विशो विशो वो अतिथिम्' (SV. I. $87^{a}$.), 'पुरोजिती वो अन्धसः' (SV. I. $545^{a}$.) इत्यादयश्चानुष्टुभः ॥

(89) M adds स्यात् (90) A quotes only the first *pāda* (91) A adds इत्युच्यते (92) All the Mss quote here प्र होत्रे पूर्व्यं वचः as an extra illustration (93-4) A omits (94) M: बक्तानि (95) A : सप्तभि. (96) M quotes the second *pāda* too. (97) A मन्तरो (98) A drops अनुष्टुप् and पादैः; S drops पादैः ; M: अष्टाक्षरैः

॥ ३ ॥ त्रिपात् क्वचिज्जागताभ्यां च[99] ॥ २४ ॥

जागताभ्यां पादाभ्यां, 'च'-कारादुगायत्रेण चैकेन त्रिपदा चानुष्टुप्[100]। यथा—"मा कस्मै धातमभ्यमित्रिणे नः" (RV. I. 120. 8ª) इति। 'ताभ्यां कृतिः' (R. Pr. XVI. 38) इति बह्वृचाः॥

॥ ३ ॥ मध्येऽन्ते[101] च ॥ २५ ॥

एतौ जागतौ पादौ मध्ये चान्ते च स्यातां गायत्रस्त्वादाविति त्रिपाद्भवति। किमर्थमिदं प्राप्तमेवं[102] निर्देशमस्याविवक्षात्? सत्यम्। आद्यन्तयोर्जागतौ मा भूतामिति नियमार्थोऽयं योगः। तथात्वे हि पिपीलिकामध्या स्यादिति वक्ष्यति।

ननु चात्रोक्तस्यापि पिपीलिकामध्यत्वमविरुद्धम्। तस्य सर्ववर्ण[103]च्छन्दोविषयत्वात्। तर्हिदमेव सूचकम्[104]। न[105] पूर्वोक्तार्थविषये[106] उत्तरयोग इति। तेनेह द्वयोस्तुल्यबलयोर्लक्षणयोः प्राप्तयोः[107] पूर्वं बलवत्। यथा शङ्कुमत्यादिषु[108] सूत्रोदाहरणम्[109]—

याम्ते अग्ने सूर्ये रुच

उद्यतो दिवमातन्वन्ति रश्मिभिः।

ताभिः सर्वाभी रुचे जनाय नस्कृधि॥[110] (TS. IV. 2. 9. 4.) इति॥

॥ ३ ॥ बृहती जागतस्त्रयश्च गायत्राः ॥ २६ ॥

जागतः पाद एकस्त्रयश्च गायत्राः बृहती नाम[111] छन्दः।[112] 'त्रयः' [17] इति महतं षड्क्षरपादाश्चत्वारो मा भुवन्निति[113]। तेऽपि हि गायत्रा भवन्ति। गायत्रपादप्रसङ्गत्वात्।[114] गायत्रपादा हि विकारस्था, इति विकारपादानां सद्भावः सूचितो भवति।[115] तत्र विशेषः —

॥ ३ ॥ पथ्या पूर्वश्चेत्तृतीयः ॥ २७ ॥

योऽयं पूर्वोक्तो[116] जागतस्तृतीयश्चेत् पथ्या नाम बृहती[117]—'ऊर्ध्व ऊ षु ण ऊतये[118] (RV. I. 36. 13ª.) इति, 'कदा चन स्तरीरसि' (RV. VIII. 51. 7ª.) इति [119]। 'अयं तेऽस्तु हर्यतः' (RV. III. 44. 1ª.) इति सूक्ते[120]। सामयोनिषु च—'यज्ञा यज्ञा वो अग्नये' (SV. I. 35ª.) इति, 'अभि त्वा शूर नोनुमः' (SV. I. 233ª.) इत्यादयश्च। एषैव[121] प्रायेण प्रगाथेषु पूर्वा[122] भवति॥

(99) A omits क्वचित् (100) A adds भवति (101) A : अन्त्ये (102) A & M : प्राप्तमेव (103) A omits वर्ण (104) M : सूचितम् (105) A drops न (106) A : पूर्वमनुक्तार्थविषये (107) A & M : प्राप्तौ (108) A drops शङ्कुमत्यादिषु (109) A adds तु (110) A quotes only the first *pāda*. (111) M & S drop नाम (112) A & M add भवति (113) M adds दर्शयितुम् (114-115) A drops this line (116) A : पूर्वनिर्दिष्टः (117) A reads : जागतः पादः सोऽयं पथ्या नाम बृहतीति वेदितव्या (118) M drops ऊतये (119-120) A drops. (120) M : सूक्तानि (121) A : एव वै (122) M & S : पूर्वप्रगाथेषु ; A : प्रगाथे पूर्वा

॥ ३ ॥ न्यङ्कुसारिणी द्वितीयः ॥ २८ ॥

स एव जागतो[124] द्वितीयश्चेन् न्यङ्कुसारिणी नाम बृहती[125]—

मत्स्यपायि ते महः
पात्रस्येव हरिवो मत्सरो मदः ।
वृषा ते वृष्ण इन्दुः
वाजी सहस्रसातमः ॥[126] (RV I. 175. 1) इति ॥

॥ ३ ॥ स्कन्धोग्रीवी क्रौष्टुकेः[127] ॥ २९ ॥

एषैव स्कन्धोग्रीवी क्रौष्टुकेराचार्यस्य मतेन ॥

॥ ३ ॥ उरोबृहती यास्कस्य ॥ ३० ॥

एषैवोरोबृहती यास्कस्याचार्यस्य मतेन ॥

॥ ३ ॥ उपरिष्टाद् बृहत्यन्ते ॥ ३१ ॥

जागत एव पादोऽन्ते चेदुपरिष्टाद् बृहती[128]—

यदर्जुन सारमेय
दतः पिशङ्ग यच्छसे ।
वीव भ्राजन्त ऋष्टय
उप स्रक्वेषु बप्सतो नि षु स्वप ॥[129] (RV. VII. 55. 2) इति, 'न तमंहो न दुरितम्'
(RV. X. 126. 1a) इति च सूक्तं त्रिष्टुबन्तम् ॥

॥ ३ ॥ पुरस्ताद् बृहती पुरः ॥ ३२ ॥

[18] जागत एव पादः पुरस्[130]श्चेत् पुरस्ताद् बृहती—

महो यस्पतिः शवसो असाम्या
महो नृम्णस्य तूतुजिः ।
भर्ता वज्रस्य धृष्णोः
पिता पुत्रमिव प्रियम् ॥[131] (RV. X. 22. 3.) इति ॥

॥ ३ ॥ क्वचिन्नवकाश्चत्वारः ॥ ३३

क्वचिन्नवकारै[132]श्चतुर्भिः पादैः बृहती भवति—'उपेदमुपपर्चनम्' (RV. VI. 28. 8a.) इति ।

(124) A adds पादः (125) M : भवति instead of नाम बृहती (126) A quotes only the first *pāda*
(127) A : क्रौष्टुक M : क्रौष्टुकैः (128) A adds नाम भवति (129) A quotes only the first *pāda*.
(130) A adds प्रथमः (131) A quotes only the first *pāda*. (132) A & M नवकाक्षरैः

अनुष्टुब्विदमृगिति[133] बह्वृचाः (*vide* R. Pr. XVIII. 21.)। 'तं त्वा वयं पितो वचोभिः' (RV. I. 187. 11ᵃ.) इति च, 'उभावग्नी उपस्तुणते' (TB. III. 7. 4. 18ᵃ.) इति च ॥

॥ ३ ॥ वैराजौ[134] गायत्रौ च ॥ ३४ ॥

क्वचिदित्यनुवर्तते । वैराजौ द्वौ पादौ गायत्रौ च द्वौ क्वचिद् बृहती भवति—

द्यौस्ते पृष्ठं पृथिवी सधस्थम्

आत्मान्तरिक्षं समुद्रो योनिः ।

विख्याय चक्षुषा त्वम्

अभि तिष्ठ पृतन्यतः ॥ (VS. XI. 20.) इति वाजसनेयके ।

निर्देशक्रमस्याविवक्षितत्वात् पूर्वौ[135] गायत्रौ परौ नु वैराजौ[136]

'या ते रुद्र शिवा तनूः'[137] (TS. IV. 5. 1. 1ᵃ) इति तैत्तरीयके ।

अथ मध्ये[138] वैराजौ अभितो गायत्रौ—'युवं श्रास्तं महो

रन्' (RV. I. 120. 7ᵃ.) इति । इमां विष्टारबृहतीति बह्वृचाः (R. Pr XVI 49) ।
अथ मध्ये गायत्रौ अभितो वैराजौ—'इन्द्राणीवाविधवा भूयासम्' (*TB. III. 7.5 10ᵃ*) इति ॥

॥ ३ ॥ त्रिभिर्जागतैर्महाबृहती ॥ ३५ ॥

त्रिभिर्जागतैः पादैर्महाबृहती[139]—

अजीजनो अमृत मर्त्येष्वाँ

ऋतस्य धर्मन्नमृतस्य चारुणः ।

सदासरो वाजमच्छा सनिष्यदत् ॥[140] ( R V. IX. 110.4 ) इति, पराश्च

तिस्रः 'अभ्यभि हि श्रवसा' ( RV. IX. 110.5ᵃ) इति, 'दिवः पीयूषं पूर्व्यं यदुक्थ्यम्' (IX. 110.8ᵃ ) इति पञ्चभिश्च[141] ॥

॥ ३ ॥ सतोबृहती ताण्डिनः[142] ॥ ३६ ॥

एषैव सतोबृहती ताण्डिन आचार्यस्य मतेन । 'बार्हतमपि

दृष्टं सतो—[19] बृहत्या सत्रैशाक्षरे' (NS. I. 2. 1. 41) इति छन्दोगाः । तथा
च ब्राह्मणम्—'वयं घ त्वा सुतावन्तः' (PB. XII. 4. 3.ᵃ) इति सतोबृहती ॥

(133) A : इयमेवानुष्टुब्विति : M : अनुष्टुब्विदमृगिति (134) M adds द्वौ (135) A & M add पादौ (136) A drops नु ; M : परान्निर्वैराजौ (137) All the Mss. quote another word अघोरा (138) M drops अथ मध्ये (139) A omits the sentence ; (140) A quotes only the first *pāda*, and omits the rest of the *bhāṣya* (141) M reads 'पञ्चर्च' after अभ्यभि हि ; S omits the last illustration. (142) A omits this *sūtra* along with the *bhāṣya* on it.

॥ ३ ॥ पंक्तिर्जागतौ गायत्रौ ॥ ३७ ॥

जागतौ[143] पादौ गायत्रौ च[144] पंक्तिश्छन्दः। तत्र विशेषः—

॥ ३ ॥ पूर्वौ चेदयुजौ सतःपंक्तिः ॥ ३८ ॥

याविमौ पूर्वनिर्दिष्टौ[145] जागतौ तावयुजौ प्रथमतृतीयौ चेत् सतःपंक्तिर्नाम पंक्तिः[146]—'ओजिष्ठं ते मध्यतो मेद उद्भृतम्' (RV III. 21. 5a.) इति 'इरज्यन्नग्ने प्रथयस्व जन्तुभिः' (RV. X. 140. 4a.) इति, 'य उस्रिया अप्या अन्तरश्मनः'[147] (RV X. 108. 6a.) इति च। एताः[148] सतोबृहतीति बह्वृचाः (R. Pr XVI. 57)। तथा च वालखिल्यानधिकृत्य ब्राह्मणम् (Ai.B.) 'ते हैके सह बृहत्यौ सह सतोबृहत्यौ व्याहरन्ति' इति। 'एतौ सिद्धविष्टारबृहतीति[149] छन्दोगाः (NS. I.)

एषैव प्रायेण प्रगाथानामुत्तरा भवति॥

॥ ३ ॥ विपरीतौ[150] च ॥ ३९ ॥

सतः पंक्ते विपरीता च पंक्तिर्भवति। तेन गायत्रावयुजौ जागतौ च युजौ चेत् पंक्तिर्भवति। संज्ञा[151] विपरीमेत्येव। यथा—

य ऋष्वः श्रावयत्सखा
विश्वेत् स वेद जनिमा पुरुष्टुतः।
तं विश्वे मानुषा युगा
इन्द्रं हवन्ते तविषं यतस्रुचः॥ (RV. VIII 46 12) इति॥

॥ ३ ॥ आस्तारपंक्तिः परतः ॥ ४० ॥

तावेव जागतौ पादौ परतः परस्तात्[152] स्याताम् आद्यौ च गायत्रौ चेदास्तारपंक्तिः। यथा—

विभ्राजञ्ज्योतिषा स्व-
रगच्छो रोचनं दिवः।
येनेमा विश्वा भुवनान्याभृता
विश्वकर्मणा विश्वदेव्यावता॥ (RV X. 170 4) इति, 'असौ यस्ताम्रो अरुणः' (TS. IV. 5. 1. 7a.) इति, 'अग्निं न स्ववृक्तिभिः' (RV. X 21. 1a.) इति च [153] सूक्तम्। 'इन्द्र सोममिमं पिब' (RV. X. 24 1a.) इति च द्वे सूक्ते॥ [154]

(143) M adds द्वौ (144) A & M *omit* च and have द्वौ instead. (145) A : पूर्वौ निर्दिष्टौ (146) A adds भवति (147) M omits this illustration. (148) A : एता ; M : एतौ (149) M : सिद्धो विस्तारपंक्तिरिति (150) A does not read it as a *sūtra* ; A reads विपरीता (151) M & S : संख्या (152) M : पुरस्तात् (153-154) A omits ; S omits द्वे सूक्ते

॥ ३ ॥ प्रस्तारपंक्तिः पुरतः ॥ ४१ ॥

[20] पुरतश्चे[155]ज्जागतौ परतः गायत्री प्रस्तारपंक्तिः। यथा—'उच्छ्वञ्चस्व पृथिवि मा निबाध' (RV. X. 18. 11$^{a}$.) इति, 'आ विद्युन्मद्भिः मरुतः स्वर्कैः' (RV. I. 88. 1$^{a}$.) इत्यादयश्च ॥

॥ ३ ॥ विष्टार[156]पंक्तिरन्तः ॥ ४२ ॥

अन्तौ मध्यस्थेऽजागतौ अभितो गायत्री विष्टारपंक्तिः। यथा—'अग्ने तव श्रवो वयः' (RV. X.14 1$^{a}$) इति ॥

॥ ३ ॥ संस्तार[157]पंक्तिर्बहिः ॥ ४३ ॥

यदि बहिरादितोऽन्ततश्च जागतौ मध्ये गायत्री[158] संस्तारपंक्तिः। यथा—'पितुभृतो न तन्तुमित् सुदानवः' [RV. X. 172. 3$^{a}$(2$^{a}$)] इति।

॥ ३ ॥ अक्षरपंक्तिः पञ्चकाश्चत्वारः ॥ ४४ ॥

पञ्चाक्षराः पादाश्चत्वारश्चेदक्षरपंक्तिः। यथा—'परि प्र धन्वेन्द्राय सोम' (RV. IX. 109. 1$^{a}$) इति सूक्तम्। 'पश्वा न तायुं गुहा चतन्तम्' (RV. I. 65. 1$^{ab}$) इति षट् सूक्तानि। 'क ईं व्यक्ता नरः सनीलाः' (RV. VII. 56. 1$^{ab}$.) इति नवर्चः, 'प्र शुक्रैतु देवी मनीषा' (RV. VII. 34. 1$^{ab}$.) इत्यत्र[159] विंशतिः।

कथं पुनः 'प्र शुक्रैतु देवी मनीषेति वैश्वदेवमित्युपक्रम्य ता व विच्छन्दः सन्ति द्विपदा' (Tan. B. I. 2. 9.) इति ब्राह्मणम्। 'द्विपदा एवैते' (R. Pr. XVIII) इति बह्वृचाः। तथा च—द्विपदा एव मध्येऽनवसाय पठन्ति[161]। अनुष्टुभास्त्वेव छन्दोगाः पठन्ति ब्राह्मणश्च (P. B. XIV. 5. 6)। 'प्र वाग्यसाः' (SV. II. 510$^{a}$) इत्यक्षरपंक्तिरिति। 'पवस्व सोम महान् समुद्रः' (RV. IX. 109. 4$^{ab}$) इत्यक्षरपंक्तिरिति च ॥

॥ ३ ॥ द्वावप्यल्पशः ॥ ४५ ॥

अक्षरपंक्तेरेवाल्पमल्पं क्षीयमाणमल्पेन परिमाणेन द्वौ पञ्चाक्षरौ पादौ भवतः। 'अल्पशः' इति वचनात् त्रिपदाऽपि[162] भवति। तत्र त्रिपदा—

भगो न चित्रो
अग्निर्महोनाम्।
दधाति रत्नम् ॥ (SV. I. 449.) इति। [21] अथ

(155) A adds प्रथमतः (156) M : विस्तार° (157) A : प्रस्तार° (158) A adds चेत् (159-160) M omits. S omits from कथं.. (161) A : पंक्ति (162) M : त्रिपदी भवति ; S : त्रिपदपि

द्विपदा—

एवा ह्येव ।

एवा ह्यग्ने ।

एवा हि वायो ।

एवा हीन्द्र ।

एवा हि पूषन् ।

एवा हि देवाः ॥ (TA. I. 20. 1.) इति । एवमन्यान्यपि बह्वृचाना पुरोपदानि ।
पि' शब्दादेकपदाऽपि भवति—'स' शुनं शोचिः' (*Mahānāmnyaḥ* 5) इति, 'ईशे हि शक्रः'
A IV. 8)[163] इत्यादयश्च ॥

॥ ३ ॥ पदपंक्तिः पञ्च ॥ ४६ ॥

पञ्चाक्षरा पञ्चपदा पदपंक्तिः । यथा—

इन्द्र जुषस्व

आयाहि शूर ।

पिबा सुतस्य

मध्वश्चकानः

चारुर्मदाय ॥ (SV. II. 302.) तथा—

इन्द्र जठरं

पृणस्व मधो' ।

अस्य सुतस्य[164]

उप त्वा मदाः

सुवाचो अस्थुः ॥ (*Ibid* 303) तथा—

इन्द्रस्तुराषाट्

जघान वृत्रम् ।

बिभेद वलं[165]

ससाहे शत्रून्

मदे सोमस्य ॥ इति (*Ibid* 304)

एवमेतत्तृचमन्येषु त्रिपादेषु[166] त्रीणि त्रीण्युपसर्गाक्षराणि, न तु स्वानि इति ब्राह्मणवादेभ्यः । तथा
हि—'चतुस्त्रिंशदक्षराः संस्तुतो[167] भवति' (P. B. XII 13.24) इति स्वतश्चतुस्त्रिंशदक्षरत्वं[168]
नास्तीति सूचयति । 'कनीयांसि वेदेषु छन्दांस्यासन् इत्युपक्रम्यानुष्टुभमभिसम्पादयन्ति' इति प्रकृत्या

163) M adds an इति here (164-165) A leaves out the last two feet of the melody
(166) M : एवमेतत्तृच आर्षेषु त्रिषु त्रिषु (167) A : सस्तुता ; M : संस्कृता ; S सस्तुता (168) A :
चतुस्त्रिंशदक्षरं

[169]नानुष्टुबिति दर्शयति। तथा—'द्वे वा अक्षरे अतिरिच्येते षोडशिनोऽनुष्टुभमभिसम्पन्नस्य' इति। तदेव सूचयति।[170]

अपि चाथर्वणिका अनुष्टुप्सृष्टमे[171]वैतत् सूक्तमधीयते[172]। एतेनानुरूपस्तृचो व्याख्यातः।[173] अस्यान्त्यामृचं बह्वृचा अपि अनुष्टुप्सृष्टामधीयते।[174] सामयोनिषु च संज्ञा[175]प्रकर्षोऽप्येष्यते विराट्स्थानासु विराड्रूपासु च—'साधुर्न गृध्नुरस्तेव शूरः' (RV. I. 70. 11^ab) इति। सा च स्यादक्षरपंक्तिः॥[176]

[22] ॥ २ ॥ चतुष्कपट्कौ त्रयश्च ॥ ४७ ॥

'पञ्च'[177] इत्यनुवर्तते। चतुरक्षरषडक्षरश्चेति द्वौ पादौ त्रयश्च पञ्चाक्षराः स्युः सा पदपंक्तिः। 'अग्ने तमद्याश्वं न स्तोमैः' (RV. IV. 10. 1^ab.) इति तिस्रः[178]। या प्रथमाया आद्यास्त्रयः[179] पञ्चकाश्चतुर्थश्चतुष्कः पञ्चमः षट्क इति। बह्वृचास्त्वाहुः 'आद्यास्चत्वारः पञ्चका' पञ्चमषट्क इति भुरिक् पदपंक्तिर्भवति' (R. Pr. XVI. 19.) इति। तद्यथा—'अधा ह्यग्ने क्रतोर्भद्रस्य' (RV. IV. 10 2^ab) इति तिस्रः,[180] 'घृतं न पूतम्' (RV. IV 10. 6^a) इति च। 'चतुष्कपट्कौ' इति योगविभागेन[181] अक्षरपंक्तिष्वपि योज्यम्।[182] तथा हि—'वि यो वीरुत्सु रोधन् महित्वा' (RV. I 67. 9^ab) इति। पदपंक्तिष्वपि अक्षरपंक्तिप्रवादो दृश्यते'—बृहतीरुष्णिहः पंक्तिरक्षरपंक्तिरिति। विरूपाणि छन्दांसीति पदपंक्तिप्रवादो दृश्यते। पदपंक्तिरूपदधातीति। 'पदपंक्तयो गायत्रीविशेषाः संज्ञा[183]सन्निकर्षात्' इति बह्वृचाः। पंक्ति[184]विशेषा एव ब्राह्मणवादेभ्य इत्याचार्याः। तथा च ब्राह्मणवादः—'पङ्क्तयो याज्यानुवाक्या भवन्ति पंक्ती याज्यानुवाक्ये भवतः। पञ्चाक्षरा पंक्तिः—"अग्ने तमद्य" (RV. IV. 10. 1^a) इति।' पंक्त्या[185] जुहोतीति-संज्ञाविकर्षो[186]ऽप्येष्यते विराट्स्थानासु विराड्रूपासु च॥[187]

॥ ३ ॥ पथ्या पञ्चभिर्गायत्रैः ॥ ४८ ॥

पञ्चभिर्गायत्रैः पादैः पथ्या नाम पंक्तिः[188]। 'अक्षन्नमीमदन्त हि' (RV. I. 82. 2^a) इति, 'यच्चिद्धि सत्य सोमपाः' (RV. I. 29. 1^a) इत्यादि सूक्तम्।[189] सामयोनिषु च—'स्वादोरित्था विषूवतः' (SV. I. 409^a.), 'आ ते अग्न ऋचा हविः' (SV. II. 373^a.) इति च॥[190]

॥ ३ ॥ जगती षड्भिः ॥ ४९ ॥

गायत्रैरित्यनुवर्तते। षड्भिर्गायत्रैः पादैः जगतीच्छन्दो[192] भवति। [23] 'अव द्वके अव त्रिका' (RV. X. 59. 9^a.) इति, 'असौ योऽवसर्पति नीलग्रीवो विलोहितः' (VS. XVI. 7^ab.) इति च।

(169) A : प्रकृत्यानुष्टुबिति (170) A : सूचितम् (171) M : अनुष्टुप्सृष्टम् (172) A & M : अधीयन्ते (173) M : व्याप्य ; S : व्याख्य (174-75) M : अनुष्टुप्सृष्टामधीयते ; A : अनुष्टुप्सृष्टामधीयन्ते (176) A reads as a sūtra सा च चतुरक्षरक्षरपंक्तिः (177) All the Mss. : पञ्चका (178) A Omits तिस्रः (179) A : अत्राद्ये त्रय (180 M cites : आभिष्टे अद्य इति, and omits तिस्रः (181) M : विभागेन ; S : विभागात् (182) M : युज्यते ; S : योग । (183) A : संख्या (184) A : पदपंक्तिविशेषा (185) M : पदपंक्तौ (186) M & S भेद (186-87) M omits (188) A adds भवति (189) M : इत्यादीनि सूक्तानि (190) M : इत्यादय (192) A : जगती नाम पंक्ति ।

'एजतु दशमास्यो गर्भो जरायुणा सह' (VS. VIII. 28ab.) इति च। 'उभे यदिन्द्र रोदसी' (RV. X. 134. 1a.) इति च सूक्तंपंक्त्यन्तम्। तत्र जगत्याम् 'अष्टकौ सप्तकः षट्को दशको नवकश्च वा' (R. Pr. XVI. 76.) सन्ति पादाः। ते द्वे अपि महापंक्तिर्नाम जगतीति[193] बह्वृचाः॥

## ॥ ३ ॥ एकेन त्रिष्टुब् ज्योतिष्मती ॥ ५० ॥

व्याख्यातान्यत्रस्त्रिष्टुभः। 'एकद्वित्रिचतुष्पादुक्तपादम्' (loc cit. 3/7) इत्यत्र एकपदा द्विपदा त्रिपदा[194] चतुष्पदा चेति। तासां चतुष्पदा त्रिष्टुबिति परामृश्यते। 'मध्ये ज्योतिर्मध्यमेन' (P.3/53) इति वाक्यशेषविहितात्त्वचतुष्पदा त्रिष्टुबेकेन गायत्रेण पादेन स्वैश्च[195] त्रिभिर्ज्योतिष्मती नाम[196] भवति॥

## ॥ ३ ॥ तथा जगती ॥ ५१ ॥

तथा जगत्यपि[197] चतुष्पदा गायत्रेणैकेनैव स्वैश्च त्रिभिर्ज्योतिष्मती नाम[198]भवति। तत्र विशेषः—

## ॥ ३ ॥ पुरस्ताज्ज्योतिः प्रथमेन ॥ ५२ ॥

प्रथमेन गायत्रेणो[199]त्तरैश्च स्वैः[200] पुरस्ताज्ज्योति[201]र्नाम त्रिष्टुप् तथा जगती।[202] तत्र त्रिष्टुप्[203]—'आ ते मह इन्द्रोत्युग्र' (RV. VII. 25. 1a.), 'क्रीळन्नो रश्म आ भुवः'[204] (RV. V. 19. 5a.) इति च। अथ जगती[205]—

स्तुतं स्तव्यं प्रतिभर्तं
मद निधामामादिश आ वृक्षे तुवः।
यन्नोर्ध्वाजा भानुर ते भुजे
स वाहं सनिष्यन्नुदादहे॥ इति चेति (T. S. VII. 3. 11. 2)॥

(193) A drops नाम जगती (194) M & S drop त्रिपदा (195) A : स्वकोर्येश्च (196) A reads : त्रिभिः पादैः ज्योतिष्मती त्रिष्टुबिति (197) A : जगत्यामपि (198) A : ज्योतिष्मती जगतीति (199) A adds पादेन (200) A reads : उत्तरैः स्वकीयैश्च त्रिभिः (201-2) A reads : ज्योतिस्त्रिष्टुब् भवति। तथैव ज्योतिर्जगती भवति। (203) A reads : तत्र पुरस्ताज्ज्योतिस्त्रिष्टुबुदाहरणम् ; ॥। अथ त्रिष्टुभि (204) M cites the entire ṛk. (205) A cites another ṛk : इमे त इन्द्र ते वयं (RV. I. 57.4) in toto.

## ॥ ३ ॥ मध्येज्योतिर्मध्यमेन ॥ ५३ ॥

मध्यमेन[206] गायत्रेणा[207]भितः स्वैः पादैर्मध्येज्योतिर्नाम त्रिष्टुप् तथा जगती[208]। तत्र त्रिष्टुप्—'एतत् त्यन्न योजनमचेति सस्वर्ह यत्' (RV. I 88.5) इति[209]। अथ जगती—

> तदश्विना भिषजा रुद्रवर्तनी
> सरस्वती वयति पेशो अन्तरम् ।
> अस्थिमज्जानं मासरैः
> कारोतरेण दधतो गवां त्वचि ।[210] (VS. XIX 82) इति ।

यथा—'यत्र मनवे संमिमिक्षथुः' (RV. VIII. 10 2ᵃ.) इति[211] च । 'ताभिरायातं वृषणोप मे हवम्' (RV. VIII. 22 12ᵃ.) इति च ॥

## ॥ ३ ॥ उपरिष्टाज्ज्योतिरन्त्येन ॥ ५४ ॥

अन्त्येन गायत्रेण पूर्वैश्च स्वैरुपरिष्टाज्ज्योतिर्नाम त्रिष्टुप् तथा जगती । तत्र त्रिष्टुप्[212]—'तुभ्यं स्तोका घृतश्चुतो ऽग्ने विप्राय सन्त्य' (RV. III. 21. 4ᵃᵇ.) इति । अथ जगती[214]—घृतासानं महिषं विश्वदर्शतम्' (RV. X 140. 6ᵃ.), 'अग्निनेन्द्रेण वरुणेन विष्णुना' (RV. VIII. 35. 1.ᵃ.) इति सूक्तम्, 'अग्नेर्मन्वे प्रथमस्य प्रचेतसः' (AV. IV. 23. 1ᵃ.) इति चानुवाकः ।

'प्रायेण त्रिष्टुब् ज्योतिष्मत् विराट्स्था' (Uvaṭa on R. Pr. XVI. 69.) इत्याहुः बह्वृचाः । तथा—'नवकौ द्वौ वैराजत्रिष्टुभौ च विराट्स्थाना ह नाम' (R. Pr. XVI. 67, adapted) इत्यत्र[215] त्रिष्टुबित्याहुः । यथा—'श्रुधी हवमिन्द्र मा रिषण्यः' (RV. II. 11. 1ᵃ) इति सूक्तमुपेत्यन्त्याः[216] ।

एवमेतानि सप्त छन्दांसि व्याख्यातानि । एषामेवान्येऽपि प्रकारा यथासम्भवं द्रष्टव्याः । तद्यथा—जागतेनैकेन[217] चतुर्भिर्वाष्टकैः त्रिष्टुप्[218] । यथा—'नमोवाके प्रस्थिते अध्वरे नराः' (RV. VIII. 35. 23ᵃ.) इति । तां महाबृहतीति[219] बह्वृचाः (cf. R. Pr. XVI. 71.) । एवमन्यत्रापि[220] द्रष्टव्यम् ॥

(206) A : मध्यमे ; M : मध्येन (207) A adds पादेन (208) A : त्रिष्टुप् भवति । तथैव जगत्यपि । (209) All the MSS add another illustration which could not be traced, A : ऋतिमृच ३ तकार्म न रिति विति ; M : ऋतुरन्ये इत्यसंकामन्तरास्तरीति ; S : य कुर्वन्नेह या पंततव्य हास्तक्ष (210) A reads : तदश्विना भिषजा रुद्रवर्तनी इत्यादिना गवां त्वचिश्नस्ता । (211-12) A omits. (213) A omits the second *pāda*, M quotes only half of the second *pāda* (214) None of the MSS has this sentence. (215) A drops इत्यत्र (216) A : अन्त्यास् (217) A adds पादेन (218) M adds भवति (219) A : तां महतीति (220) A : एवमन्यत्रपि

॥ ३ ॥ एकस्मिन् पञ्चके छन्दः शङ्कुमती ॥ ५५ ॥

[25] एकस्मिन् पादे पञ्चाक्षरे सति सर्वं छन्दः शङ्कुमती नाम[221] भवति ।[222] सत्यपि छन्दोऽधिकारे पुनश्छन्दोग्रहणं[223] प्रकृते त्रिष्टुब्जगतीव्यावर्तनेन छन्दोमात्रप्रतिपत्त्यर्थम् । 'पितुं नु स्तोषम्' (RV I 187. 1a.) इत्यत्राद्यः[224] पञ्चकः । अन्ये त्रयोऽष्टकाः । एषोष्णिग्विशेष संख्या[225]सन्निकर्षात् । एवमुत्तरत्रापि संख्यासन्निकर्षात् स्वयमेव[226] छन्दो[227] विद्यात् । एतामनुष्टुब्गर्भां (Anu. V 7) इति बह्वृचाः । पञ्चकचतुष्कसप्तकत्रैष्टुभैश्च स्यात् । यथा—'शिवा नः सख्या सन्तु भ्रात्रा (RV. IV. 10. 8a) इति[228] ।

एकस्मिन्नि[229]ति किम् ? 'कृतं चिद्धि ष्मा सनेमि द्वेषः' (RV. IV. 10. 7ab) इत्येषा ऋग् मा भूदिति[230] । अत्र हि द्वौ पञ्चकौ सप्तको नवकश्च पादाः[231] । पञ्चक इति किम् ? 'सनितः सुसनितरुग्र' (RV. VIII. 46. 20a.) इत्येषा[232] मा भूदिति[233] । अत्र हि नवकाष्टकैकादशाष्टकाः पादाः । तामेतां विषमपदा (Anu. VII. 8.) इति बह्वृचाः ॥

॥ ३ ॥ षट्के ककुम्मती[234] ॥ ५६ ॥

एकस्मिन् पादे षडक्षरे सति सर्वं छन्दः ककुम्मती नाम । यथा—

ता मे अश्व्यानां
हरीणां नितोशना ।
उतो नु कृत्व्यानां नृवाहसा ॥[235] इति । (RV. VIII. 25. 23.) अत्र हि षट्कमध्य-

मैकादशकाः पादाः[236] । तामेतामुष्णिग्गर्भेति (Anu. IV. 3.) बह्वृचाः । यथा—'तव स्वादिष्ठाऽग्ने संदृष्टिरिदा चिदह्नः' (RV. IV. 10. 5abc) इत्यत्र पञ्च पञ्चकाः[237] षट्कश्चैकः । तामेतां महापदपङ्क्तिरिति (R. Pr. XVI. 18.) बह्वृचाः । उभयप्राप्तौ पूर्वप्राबल्याच्छङ्कुमत्येव स्यात्, न[238] ककुम्मती । यथा—

वि योक्त्रा विमोच्यम्
अध्वनः स्कभ्नीत ।
काष्ठां गच्छत ॥ (T. S. I. 7. 8. 1.) इत्यत्र सप्तकषट्कपञ्चकाः पादाः ॥

(221) M & S omit नाम (222) M adds छन्दः (223) M : पुनर्ग्रहणं (224) M : तत्र आद्य पद ; A : अत्राद्य पद (225) A : संख्या (226) M : सर्वमेव (227) M & S omit छन्दो (228) A adds शङ्कुमती (229) A : एकस्मिन् (230) A reads : इत्यादिका ऋगात इत्यन्या एषा मा भूदिति (231) A adds भवन्ति (232) A : इत्यादिका (233) M & S drop इति (234) A : ककुम्मती ; M ककुद्मती (235) A quotes only the first *pāda*. (236) M : अत्र हि षट्कमध्यमैकादशाष्टका पादाः (237) M : पञ्चाष्टका (238) M : न : S : ना ।

[26] ॥ ३ ॥ त्रिपादणिष्ठमध्या पिपीलिकमध्या[239] ॥ ५७ ॥

यस्यास्त्रिपादाया मध्यमः पादोऽणिष्ठोऽल्पतमः[240] सा पिपीलिकमध्या। यथा—हरी यस्य सुयुजा विव्रता वेरर्वन्तानुशेपा। उभा रजी न केशिना पतिर्दन्॥ (RV. X. 105. 2.) इति। अत्र मध्यमोऽमितस्त्रिष्टुभौ।

ननु च पूर्वप्राबल्यात् ककुम्मत्येवैषा[241] स्यात्। नैतदतुल्यबलत्वात्[242]। गुरु हीदं लक्षणं 'त्रिपादणिष्ठमध्ये'ति चतुर्विशेषणत्वात्। ककुम्मतीलक्षणं लघु 'एकस्मिन् षट्के' इति द्वि[243]विशेषणत्वात्। लघुनश्च ग्रहणे गुरुणि[244] उदाहरणानां बहूनामितरलक्षणानामविवक्षा[245] स्यात्। तस्मात् पिपीलिकमध्येत्येषा[246]। तथा—'परि सु प्र धन्व वाजसातये' (RV. IX. 110. 1ab.) इति[247] तिसृणामृचां मध्यमा[248] गायत्रा अमितो जागताः। 'अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम्' (RV. VIII. 46. 14ab.) इत्यत्र मध्ये[249] गायत्रोऽमितस्त्रयोदशाक्षरौ[250] बृहतीविशेषोऽयम् (cf. R. Pr. XVI. 52.)। त्रिपादिति किम्? अवितासि सुन्वतः[251] (RV VIII. 36. 1a.) इत्येषा मा भूत्।[252] अत्र हि मध्यमो गायत्रोऽमितो द्वौ द्वौ[253] जागतौ।[254] इष्ठनो ग्रहणं किम्[255]? '[256]इदं विष्णुर्विचक्रमे (RV. I. 22. 17a.) इत्येषा मा भूत्। मध्यमग्रहणं किम्[257]? 'प्र वां घोषे भृगवाणे न शोभे' (RV. I. 120. 5a.) इत्येषा मा भूत्। अत्र त्रैष्टुभौ द्वौ[258] षट्कश्च। ककुम्मत्येषा। तामेतां तनुशिरा[259] (RPr. XVI. 35.) इति बह्वृचाः॥

॥ ३ ॥ विपरीता यवमध्या ॥ ५८ ॥

पिपीलिकमध्याया विपरीतायास्त्रिपादेव[260] महिष्ठमध्या[261] सा यवमध्या[262]। यथा—'स इन्द्रे यं वसूनाम् (RV. IX. 108. 13a.) इत्यत्र मध्यमो[263] दशकोऽमितः सप्तकौ। त्रिपादिति किम्? 'सं मा तपन्त्यभितः' (RV. I. 105. 8a.) इत्येषा मा भूत्। एषा हि पञ्चपदा। अस्या मध्यमो जागतोऽमितो गायत्राः। 'मीढुष्टम शिवतम' (VS. XVI. 51a.) इति च। एते द्वे ऋचौ विषममध्येति बह्वृचाः[264]

[27] इष्ठनो[265] ग्रहणं किम्? 'ता विद्वांसा हवामहे वाम्' (RV. I. 120. 3a.) इत्येषा मा भूत्। अत्र हि मध्यमो[266] जागतोऽमितो नवकौ। तामेतां काविराट्[267] (RP. XVI. 40) इति बह्वृचाः॥

(239) A & M : पिपीलिकामध्या (240) A : अणुतर (241) M drops एव (242) M : बलवत्त्वात् (243) A omits द्वि (244) A drops गुरुणि (245) M reads : उदाहरणेनतानामेव लक्षणानामविवक्षा S reads ; उदाहरणलक्षणानामविवक्षा (146) A drops इति (247) M adds यत्र (248) M adds पादा (249) A : मध्यम पाद (250) A : त्रयोदशाक्षरा ; M : त्रयो दशाक्षरौ (251) M cites 'अग्निमीळे पुरोहितम्' instead (252-54) M omits (253) A omits the second द्वौ (255) A : अणिष्ठमध्येति किम्? (256-57) A omits (258) A reads पादौ instead of द्वौ (259) A : तनुशिरा ; M : तनुशिरा (260) A reads : या त्रिपादेव सति (261) A : महिष्ठमध्यमा ; M adds : न सूक्ष्ममध्या (262) M drops सा यवमध्या (263) A adds पादो (264) A : यवन्तिमध्येति बह्वृचाः M : विषमामध्येति (265) A : इष्टनो (266) A adds पादो ; M : मध्यमो जागतो 267) A : कौ विराडिति

## ॥ ३ ॥ ऊनाधिकेनैकेन[268] निचृद्भुरिजौ ॥ ५९ ॥

एकेनाक्षरेण न्यूनेन निचृद्विशेषणानि छन्दांसि भवन्ति। निचृद्गायत्री निचृदुष्णिगिति। एकेनाधिकेन भुरिग्विशेषणानि। भुरिग्गायत्री भुरिगुष्णिगिति। नैकाक्षरेण न्यूनेनाधिकेन वा[269] छन्दोऽन्यत्वं भवतीत्यभिप्रायः। तथा च ब्राह्मणम्—'न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यामिति। न ह्येकस्मादक्षराद्वियन्तीति[270] च' (AiB. I. 6.)। यथा—'इदं विष्णुर्विचक्रमे' (RV. I. 22.17a) इति निचृद्गायत्री, 'विद्वांसाविद्दुरः पृच्छेत्' (RV. I. 120 2a) इति भुरिग्गायत्री। 'पितुं नु स्तोषम्' (RV. I. 187. 1a.) इति भुरिगुष्णिक्[271]। पूर्वमुदाहृतासु सर्वत्र भवन्ति निचृद्भुरिजः[272] ॥

## ॥ ३ ॥ द्वाभ्याम् विराट्स्वराजौ ॥ ६० ॥

द्वाभ्यामूनाभ्यां[273] विराड्विशेषणानि छन्दांसि भवन्ति। विराड्गायत्री, विराडुष्णिगिति। द्वाभ्यामेवाधिकाभ्यां स्वराड् विशेषणानि[274] भवन्ति। स्वराड्गायत्री स्वराडुष्णिगिति। याः[275] खल्वृचः षड्विंशत्यक्षरास्ताः स्वराड्गायत्र्यो भवन्ति विराडुष्णिहो वा। यथा—'कृतं चिद्धि ष्मा सनेमि[276] द्वेषः' (RV. IV. 10. 7ab.) इति। यास्त्रिंशदक्षरास्ताः स्वराडुष्णिहो विराडनुष्टुभो वा। यथा—'ता विद्वांसा हवामहे वाम्' (RV. I. 120. 3a) इति। एवमन्यत्रापि।[277] द्वयोश्छन्दसोर्मध्यगता ऋचः पूर्वं वा छन्दः स्वराड्विशेषणम्[278] उत्तरं वा विराड्विशेषण[279]मिति विद्यात्।

## ॥ ३ ॥ आदितः सन्दिग्धे ॥ ६१ ॥

या[280]द्वयो[281]र्मध्यगता[282] ऋचः समा वृत्तपादाभ्यां[283]ताः किं स्वित् पूर्वं छन्द आहो-[28] स्विदुत्तरमिति सन्देहे निर्णय उच्यते।

ननु[284] सन्देह एव नास्ति, द्वयोर्जात्योः साधारण्यस्ता इत्युक्तम्[285]। तथा च ब्राह्मणम्—'साधारणत्वं दर्शयति जागतो वा' (Ai. B.) इत्युक्तम्[286]। सत्यमेव। तथापि यत्रान्यतरन्निर्णेतुं शक्यते[287] छन्दस्तदेव तत्र प्रतिपत्तव्यम्[288]। यत्र विशेषहेतुर्नास्ति तत्र पूर्वोत्तरं[289] विकल्पेनानुचिन्तनीयम्। तत्रायं निर्णयहेतुरुक्तः[290]। आदित इति सूक्तेषु वाऽनुवाकेषु वा सामयोनिषु वा येन छन्दसोपक्रमः, यद्वा छन्दः प्रायिकं[291] भवति तदेव छन्दःसन्देहेषु निश्चेतव्यम्। *यथा—'यूपव्रस्का उत ये यूपवाहाः'* (RV. I. 162. 6a.)

(268) A : न्यूनाधिकेन (269) A omits वा ; M reads न न्यूनाधिकाक्षरैः। (270) A : विरोधयन्तीत्यर्थः (271-72) A : पूर्वमुदाहृता न वह्न्युष्णिक्षरतो निचृद्भुरिजौ ॥ (273) A & M add अक्षराभ्याम् ; M drops न्यूनाभ्याम् (274) A adds छन्दांसि (275) M adds another या (276-77 A omits (278) S adds इष्यते (279) A : विशेषमिति (280) A omits या (281) M adds छन्दसो (282) M मध्ये ता (283) M : समा वृत्तिपादाक्षरैः ; S : समवृत्तपादाद्यैः। (284) A adds च (285) M drops उक्तम् (286) A reads : साधारणत्वं दर्शयति स जागतो भवति (287) M & S add तत् here (288) M : प्रतिपत्तव्यम् (289) A : पूर्वं वोत्तरं वापि ; M adds वा (290) A : निर्णयो हेतुरुक्त (291) M :

इति त्रिष्टुप्छन्दःसमुदाये[292] पाठात्त्रिष्टुबेव। 'ये वाजिनं परिपश्यन्ति पक्वम्' (RV. I. 162. 12ᵃ.) इति च। योनिवदुभयोर्जातिः[293] ॥

॥ ३ ॥ देवतादितश्च[294] ॥ ६२ ॥

देवतादितश्च[295] छन्दो[296] हेतुभ्यः सन्दिग्धं निर्णेतव्यम्। आदिशब्देन वृत्तपादसंख्यानां[297] पूर्वोक्तानां ग्रहणम्। कथं पुनर्देवता निर्णयहेतुः ? द्विविधो हि निर्णयहेतुः। अव्यभिचारी कश्चिल्लिङ्गतया[298] धूम इवाग्नेः। व्यभिचार्यपि कश्चित्। प्रायिकत्वात्[299]। अपवादाभावे[300] चक्षुरादय इव विषयाणां[301] वृत्त्यादय[302] इव छन्दसाम्। न[303] तावद्देवता निर्व्यभिचारं लिङ्गं नापि प्रायिकम्[304]। कथमिदं निर्णयहेतुरिति[305] ?

बाढम्। न देवता निर्णयहेतुरित्यु[306]च्यते। किन्तु सन्देहेषु विशिष्टदेवतादर्शने विशिष्टछन्दोऽनुचिन्तनीयमित्यध्यात्मोऽयं विधिः। तत्र देवता [29] वक्ष्यते। वृत्तेस्तावन्निर्णय उच्यते। यथा— 'त्वमग्ने रुद्रो असुरो महो दिवः' (RV. II. 1. 6ᵃ.) इति जगती। न त्रिष्टुप्। अथ पादैः—

प्रथमोऽसि शाक्वरः
घृताचीनां सूनुः।
प्रियेण नाम्ना प्रिये सदसि सीद॥ (TB. III. 7.6.10)

इत्यत्र वृत्तिसंख्याऽभावेऽपि[307] परोष्णिह (cf. P. III. 20.) [illegible] पादा भवन्ति। तथाऽक्षर संख्यया[308]—'यो वाचा विवाचो मृध्रवाचः' (RV. X. 23. 5ᵃ.), 'के ते नर इन्द्र ये त इषे' (RV. X 50. 3ᵃ.) इति च द्वे। अत्र द्वौ वैराजौ पादौ द्वौ च जागतौ[309]। ततो विराड्जगत्योः साम्यात् सन्देहो संख्यया[310] त्रिष्टुबिति गम्यते। एतामभिसारिणीम्[311] (RPr. XVI. 66.) इति बह्वृचाः। सर्वेभ्यः संख्या गरीयसी (vide RPr. XVIII. 45) इति[312] बह्वृचाः, वृत्तिर्गरीयसीति[313] छन्दोगाः, पूर्वप्राबल्याद्वृत्तिर्गरीयसी[314] इति पैङ्गलाः।

॥ ३ ॥ अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वेदेवा[315] देवताः ॥ ६३ ॥

गायत्र्यादीनां क्रमादग्न्यादयो देवताः[316]। तथा च मन्त्रवर्णः[317]—'अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सम्बभूव' (RV. X. 130. 4ᵃᵇ.)[318] इति द्वे ऋचौ। अत्र मित्रावरुणौ विराजो देवता

प्रायकं (292) A : त्रिष्टुप्प्राये (293) A : योनिवद्योनि उभयो जातिः ; M : योनिवदुभयोर्जातिः (294) M : देवतादिभ्यश्च (295) M drops च (296) A drops छन्द (297) A : संस्थानां ; M reads : आदिशब्दो न वृत्तिपादसंख्यानां (298) A : आभिचारिकत्वेऽपि (299) M : प्रायकत्वात् (300) A : अवमवाभावे (301) A : रूपादीनां (302) A & [illegible] : वृत्याद्य (303) A drops न (304) A : प्रायिकं (305) A : कथमिव निर्णयहेतुरिति ; M : कथमेषां निर्णय इति हेतुरिति । (306) M drops इति (307) M : वृत्तिसंख्याऽभावेऽपि ; A : वृत्तसंख्यादि भावेऽपि (308) M : तथाऽक्षरसंख्यायाः (309) S : द्वौ वैराजौ जागतौ द्वौ (308-10) M omits (311) A : त एतेऽभिसारिण्याविति (312-13) M drops (314) A : पिङ्गल : M : पूर्वप्राबल्याद्वृत्तिर्गरीयसी (315) A drops देवा (316) A adds भवन्ति (317) A : मन्त्रवर्णा भवन्ति (318) A : सयुग्वेति द्वे , M adds after सम्बभूव—मनुष्या

'विराण्मित्रावरुणयोः' (RV. X. 130 5ᵃ.) इति वचनात्। विराट् चत्वारिंशदक्षरा[319] पंक्त्यन्तर्भूता गृह्यते। 'मित्रावरुणौ पंक्त्येन्द्रस्त्रिष्टुभा' (Ai B.) इति ब्राह्मणवचनात्[320]। परिशिष्टायाः[321] पंक्ते[322]-स्त्रिष्टुभश्चेन्द्र एव देवता। वासवी[323] पंक्तिरिन्द्रस्य त्रिष्टुबिति दर्शनात् (cf RPr. XVII. 8)।

तत्र या ऋचो गायत्री वोष्णिग्वेति सन्दिह्यन्ते[324] ता यथाग्नेय्यो गायत्र्य इत्यनुचिन्तनीया.। यथा—कृतं चिद्धि ष्मा सनेमि द्वेषः[325] (RV. IV. 10.7ᵃ.) इति। यदि सावित्र्य उष्णिह इत्यनुचिन्त्याः। तद्यथा—'अनागसो अदितये देवस्य सवितुः सवे। विश्वा वामानि[326] धीमहि'॥ (RV V. 82. 6.) इति ऋक्[327]।' यास्ते सोम प्रजावत् सो)मि सो)हं दुःस्वप्नहां दुरुष्वह (TA. X 48. 1) इत्यनुष्टुप्[328]। 'यस्ते द्रप्सः स्कन्नो यस्ते अंशुः' (RV. X. 17. 13ᵃ.) इति बृहती बृहस्पतिसम्बन्धात्[329]। 'अव वेदिं होत्राभिर्यजेत' (RV. VII. 60. 9ᵃ) इति [30] द्वे विराजौ, 'एष स्तोमो वरुण मित्र तुभ्यम्' (RV. VII. 64. 5ᵃ.) इति च मैत्रावरुणत्वात्।[330] 'प्रदातारं हवामहे इन्द्रमाहविषा वयम्'[331] (T. S. I 7. 13. 4ᵃᵇ.) इति पंक्तिरैन्द्रत्वात्। 'संक्रन्दनेनानिमिषेण जिष्णुना' (RV. X 103. 2ᵃ.) इति त्रिष्टुबैन्द्रत्वात्। 'शुभ्राः कन्या युवतयः सुपेशसः' (TB. III. 1. 2. 4ᵃ) इति जगती वैश्वदेवत्वादित्यादि द्रष्टव्यम्।

अन्येषामपि छन्दसां श्रुतौ दैवतं व्याख्यातं तदप्यच्छ्रायीयानुचिन्तनीयम्[332]। तद्यथा—'प्राजापत्या अतिच्छन्दसः विच्छन्दसो वायदेवता' पुष्पो द्विपदानां दैवतं ब्राह्मय एकपदाः स्मृताः' (RPr XVII. 9-12, adapted) इति। विच्छन्दस इति[333] पादैर्वृत्या[334] च विरूपाणि[335] विषमाणि छन्दांसि। तथा च ब्राह्मणम्—'ता उ विच्छन्दः[336] सन्ति विराजः' (AiB) इति॥

॥ ३ ॥ स्वराः[337] षड्जादयः ॥ ६४ ॥

सप्तानांछन्दसां षड्जादयः सप्त[338] स्वराश्चिन्तयितव्याः[339]। षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः स्वरा[340] इत्यपर आहुः[341]। देवतावत्[342] स्वरा अपि छन्दोविशेषप्रतिपत्त्यर्थाः। गोत्राणि च तथा[343]

(319) A : विराट् चात्र दशाक्षरपक्षा, M : विराट् त्रिंशदक्षरा : S : विराट् चात्र त्रिंशदक्षरा (320) M : दर्शनात् (321) A drops the word (322) M adds च (323) A : सती (324) A सह्यन्ते ; M : सन्दिश्यते (325-26) A drops (327) A : इत्युष्णिक् सावित्रत्वात् (327-28) A drops, E drops the illustration (329) A : बार्हस्पत्यत्वात्, M : बृहतीसम्बन्धात्, S : बार्हस्पत्यात् (329-30) A omits (331) A omits the second *pāda*. (332) A : अप्यच्छ्रायानुचिन्तनीयम् (333) A drops these two words (334) M : वृत्त्या (335) M . विरूपाणि (336) A & M : विच्छन्दस (337) A runs on with the com. on the previous *sūtra* and drops षड्जादय (338) A : षड्जादयः instead of सप्त (339) A : वेदयितव्याः, S : अनुचिन्तनीयाः (340) M omits स्वरा and reads : दा इति। अपर आह (341) M & S : आह (342) A : देवता इव ( (343) A adds च

देवतादितश्चेत्यत्रा[344]दिशब्देन संगृह्यन्ते[345]। यस्यां यस्यां[346] खल्वृचि[347] षड्जस्वरो बहुलो भवति तां तां[348] गायत्रीति विद्यात्। स्वरयोगाच्छन्दसां[349] सामनिबन्धनः[350] साम्नां सप्तस्वरत्वात्। अथवा—

उच्चौ निषादगान्धारौ नीचौ ऋषभधैवतौ।
शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः॥

गोत्रयोगस्तु मन्त्रद्रष्टॄणामृषीणां गोत्रयोगेनेति। अत्राप्यस्पष्टार्थ एव स्वराद्युपदेश[351] इत्याचार्याः॥

॥ ३ ॥ आग्निवेश्यकाश्यपगौतमाङ्गिरसभारद्वाजकौशिकवासिष्ठानि गोत्राणि ॥ ६५ ॥

[31] सप्तानां छन्दसां सप्तैतानि गोत्राणि चिन्तयेत्[352]।

॥ ३ ॥ सितसारङ्गपिशङ्गकृष्णनीललोहितसुवर्णगौरा[353] वर्णाः ॥ ६६ ॥

सप्तानां छन्दसामष्टावेते[354] वर्णाः। तत्रोष्णिग्विशेषस्य ककुभस्तृतीयो वर्णः। तथा च श्रुतिः—

शुक्लवर्णास्तु गायत्र्यः सारङ्गं रूपमुष्णिहाम्[355]।
पिशङ्गं ककुभां रूपं कृष्णं रूपमनुष्टुभाम्[356]॥
बार्हतं लोहितं प्रोक्तं पाङ्क्तं नीलमुदीरितम्[357]।
सुवर्णं त्रिष्टुभो रूपं[358] गौरं जागतमुच्यते॥ इति॥

॥ ३ ॥ श्यावान्यति[359]च्छन्दांसि ॥ ६७ ॥

[360]श्यावान्यन्यानि छन्दांसि। तथा च श्रुतिः—अतो यान्यन्यच्छन्दांसि[361] श्यावं तेषां ततः पुनः॥ इति तत्र विशेष उक्तः—'नकुलन्त्वेकपदानां द्विपदां बृहदुच्यते। सारङ्गशुक्लकृष्णरूपाणि ऋग्यजुःसामब्राह्मणानि ताः' इति। केचित्तु 'विच्छन्दसां गौरीमाहुः। भूरिजं बृषलीं विराजं पृश्निं यजुषां साम्नामृचां ब्राह्मणस्य गायत्र्यादिकलादीनि' इति[362]॥

॥ ३ ॥ रोचनाभाः कृतयः[363] ॥ ६८ ॥

[364]कृतयो वक्ष्यमाणा रोचनाभाः॥

(344) M : दैवतादिभ्यश्चेदित्यत्रा (345) A & S : गृह्यन्ते (346) A : यस्या (347) A : खल्वृच (348) A has one तां (349) A : स्वरयोगश्छन्दसां ; S : स्वरयोगश्च छन्दसां (350) A : सामनिबन्ध (351) A : अदृष्ट एव तु स्वरा उपदेशः ; M : अत्र स्पष्टार्थ etc. (352) A : अनुचिन्तयेत् (353) M omits सुवर्ण (354) M : एवैष्टौ वर्णा (355) M रूपेण शुभ्रा गायत्र्य ; A : रूपं सारङ्गमुष्णिहाम् (356) A : कृष्णमानुष्टुभं तत (357) A : लोहितं बृहतीनान्तु नीलं पाङ्क्तं ततः पुनः (358) M : त्रिष्टुभः स्वर्णवर्णाभा (359) A : श्यामान्यति (360-62) M omits (361) A : यान्यन्यानि छन्दांसि (363) M adds इति च ; S adds इति (364) M omits the rest of the *sūtra* and *bhāṣya* to the end of the chapter ;

॥ ३ ॥ अनुक्तानां कामतो वर्ण इति ॥ ६६ ॥

अनुक्तानां दैवीगायत्र्यादीनां यथाकामं वर्णाः चिन्तनीयाः। देवताज्ञानं छन्दोनिर्णयार्थम्। अदृष्टार्थं वा स्वरादयोऽप्यवश्यं छन्दोवत् प्रतिपत्तव्याः। [365]अथातो निर्वचनम्—गायत्री गायतेः स्तुतिकर्मण इत्यादिना तदपि यथा शून्ये विद्यात् ॥

इति भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिभाष्ये तृतीयोऽध्यायः॥

(365) A adds : तथा निर्वचनमपि ध्रुतात्त्यम्

# अथ चतुर्थोऽध्यायः

॥ ४ ॥ चतुःशतमुत्कृतिः[1] ॥ १ ॥

[2] अथ चतुर्दश छन्दांसि व्याख्यायन्ते। चतुरधिकं शतं चतुःशतम्। शतमक्षराणि चत्वारि चोत्कृतिर्नाम छन्दः॥[3]

॥ ४ ॥ चतुरश्चतुरस्त्यजेदुत्कृतेः[4] ॥ २ ॥

उत्कृतेर्वर्णांश्चतुरश्चतुरस्त्यजेदन्या[5]नि छन्दांसि सम्पद्यन्ते॥

॥ ४ ॥ तान्यभिसंव्याप्रेभ्यः कृतिः ॥ ३ ॥

तानि छन्दांसि अभि सम् वि आ प्र इत्येतेभ्य उपसर्गेभ्यः परः कृतिशब्दः।[6] स एषां[7] वाचकः।[8] अभिकृतिः संकृति[9]र्विकृतिराकृतिः प्रकृतिरिति।[10] तत्रोत्कृतेश्चतुर्वर्णानां[11] त्यागादभिकृतिः शताक्षरा।[12] संकृतिः षण्णवत्यक्षरा। विकृतिर्द्विनवत्यक्षरा।[13] आकृतिरष्टाशीत्यक्षरा[14]। प्रकृतिश्चतुरशीत्यक्षरा॥

॥ ४ ॥ प्रकृत्या च ॥ ४ ॥

प्रकृति[15]शब्दोऽयं प्रकृत्या[16] निरुपसर्ग एव[17] परस्य[18] छन्दसो वाचकः। कृतिरिति।[19] कृतिरशीत्य-
[32] क्षरा[20]। ता एताः सप्त कृतय एकोऽतिच्छन्दसां वर्गः[21]॥
अथ[22] सामान्यसप्तको [23]वर्गः —

॥ ४ ॥ धृत्यष्टिशक्करीजगत्यः ॥ ५ ॥

कृतिमधोऽधो[24] धृत्यष्टिशक्करीजगत्यः स्युः॥ तत्र विशेषः —

(1) A : कृतिः : M कृते (2-3) M omits (4) A omits this *sūtra* : M reads : रत्नैरुत्कृते (5) S adds चेत् (4-6) A drops (7) A म च तेषां (8) M · adds अभिसङ्कृतिः (9) M · सङ्कृति (10) A drops इति (11) A चतुर्णां वर्णानां (12) A adds सम्पद्यन्ते (13) A drops the sentence (14) M drops the sentence (15) M & S कृति (16) M · प्रकृति (17) A · निरुपसर्गस्य एव M : निरुपसर्गश्च S : निरुपसर्गश्चैव (18) M drops परस्य (19) A & S omit this sentence (20) A reads this as a *sūtra* (21) A एतावन्त सप्त कृतय एकोऽपि छन्दसां वर्ग (22) M : अथ (23) A · सामान्य सप्तको (24) A कृतेरधो या

## ॥ ४ ॥ पृथक् पृथक् पूर्वत एतान्येवैषाम् ॥ ६ ॥

एतान्येव[25] धृत्यादीनि नामान्येषामेव धृत्यादीनां पूर्वतः[26] पुरस्ताद्भवन्ति । तानि च न सर्वेभ्यः पुरस्ताद्भवन्ति किन्तु मध्ये मध्य[27] एव पृथक् पृथगेकैकस्य पुरस्तादेकैकं भवति[28]—[29]धृति[30]रष्टिः[31] शक्करी[32] जगती इति ॥

## ॥ ४ ॥ द्वितीयं द्वितीयमतितः[33] ॥ ७ ॥

येषां[34] पुरस्ताद् द्वितीयं द्वितीयं नाम कृतं तदतिशब्दात्[35]परं भवति । अतिधृतिर्धृतिरत्यष्टिरष्टिरति शक्करी शक्वर्यतिजगती जगती[36] । तत्रातिधृतिः षट्सप्तत्यक्षरा[37] । धृतिर्द्विसप्तत्यक्षरा[38] । अत्यष्टिरष्टषष्ट्यक्षरा । अष्टिश्चतुःषष्ट्यक्षरा । अतिशक्करी षष्ट्यक्षरा । शक्करी षट्पञ्चाशदक्षरा । अतिजगती द्विपञ्चाशदक्षरा । जगती पूर्वमेवोक्ता । नेयमतिच्छन्दः ।[39] अतिजगत्यर्थं पुनरिहोक्ता ।[40] एताश्चतुर्दशातिजगत्यादयोऽतिच्छन्दसः ।

तत्रातिजगती—'तमिन्द्रं जोहवीमि मघवानमुग्रम्' (RV VIII 97. 13ª) इति । 'स्वादुं परिस्रुतो-रसं' (VS. XIX. 79.ª) इति च[41] । शक्करी वा । 'अयं सहस्रमानवः'[42] (Pañ B. IV 9. 1ª) इति शक्वर्यतिशक्करी वा शाखान्तरे । 'प्र वो महे मतयो यन्तु विष्णवे' (RV. V 87 1ª) इति च[43] सूक्तम् ।

अथ शक्करी—'प्रो ष्वस्मै पुरोरथम्' (RV X. 133. 1ª) इति ।[44] 'तन्त्वं योराश्रणीमहे' (TS. II. 6. 10.2) इति च । 'अवितासि सुन्वतो वृक्तबर्हिषः' (RV. VIII. 36. 1ª.) इति च सूक्तं महानाम्न्यन्तम् ।

तथातिशक्करी—'या ते अग्ने यज्ञिया तनूस्तयेहि[45]' (TS. III. 4. 10 5) इति । अन्यया शाखान्तरे 'सुषुमा [33] यातमद्रिभिः' (RV. I. 137. 1ª.) इति च सूक्तम् । 'अध त्विषी मामन्योजसा क्रिविम्' (RV. II. 22. 2ª) इत्यादयश्च बह्वृचानाम् । 'अभि त्यं देवं सवितारमोण्योः' (SV. I. 464ª.) इति छन्दोगानाम् । 'रेतो मूत्रं विजहाति' (VS XIX. 76ª.) इति च 'दृष्ट्वा रूपे व्याकरोत्' (VS. XIX. 77ª.) इति च । द्वे इमे अष्टी वा ।

(25) M drops एव (26) M drops पूर्वत (27) A drops one मध्य (28) A reads एकैकस्य पुरस्तात् ...... भवति as a *sūtra* (29-32) M adds the अति varieties too. (33) A reads this *sūtra* as a continuation of the *bhāṣya* (34) M : यरेतेषां (35) A : तदतिशब्दात् ; M : तदिति शब्दात् (36) A reads this as a *sūtra* (37) A षट्सप्तत्यक्षरा (38) A : द्विसप्तत्यक्षरा (39) A : नेयमतिच्छन्द अतिजगत्यर्थं ; M : नेयमतिच्छन्दा अतिजगत्यर्थं (40) A adds ता (41) A drops च and runs on (42) A : अयं ह समानव ; S : अयं सहस्र मानव (43) M drops च (44) A reads here the illustration : होता यक्षदश्विना .. (45) M reads : या ते अग्ने य स्वया तनुस्तये न्यूहनेन

अथाष्टि:—'त्रिकद्रुकेषु महिषो यवाशिरम्' (RV. II. 22. 1ª.) इति। 'त्वां ह्यग्ने सदमित् समन्यव:' (RV. IV. 1. 1ª.) इति चात्यष्टिर्वा[46]। 'तव त्यं नर्यं नृतोऽप इन्द्र प्रथमम्' (RV. II. 22. 4ª.) इत्यादि अतिशक्करी वा[47]। 'अभि त्यं देवम्' (AV. VII. 14. 1ª) इति च। 'होता यक्षद्दैव्या होतारा भिषजाऽश्विना' (VS. XXI.36ª.) इति[48], इदं हवि: प्रजननं मे अस्तु' (VS XIX. 48ª) इति च वाजसनेयिनाम्[49]।

अथात्यष्टि:—'यच्चा साम्ना यजुषेति युवन्तमिन्द्रा पर्वता पुरोयुधा' (TB III. 7. 14. 1) इति, 'अया रुचा हरिण्या पुनान:' (RV. IX. III 1ª) इति च सूक्तम्। 'अग्निं होतारं मन्ये दास्वन्तम्' (RV. I 127 1ª) इति पारुच्छेपम्। 'पार्थिवान् भुवं भुवेन हविषाऽव सोमं नयामसि'[50] (TS. III. 2. 8. 6ᵇ) इति च। 'इमं समुद्रं शतधारमुत्सम् (TS IV 2. 10 2ª.) इति, 'इमामूर्णायुं वरुणस्य मायाम्' (TS. IV. 2 10. 3ª) इति, 'अजा ह्यग्नेरजनिष्ट गर्भात्' (TS. IV. 2 10 4ª.) इति च[51]।

अथ धृति:—'देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रमवर्धताम्'[52] (VS. XXVIII. 16ª.) इति, 'सखे सखायमभ्या ववृत्स्वाशुं न' (RV IV. 1. 3ª) इति, 'अवर्मह इन्द्र दादृहि श्रुधी न:' (RV. I. 133. 6ª.) इति, 'येन मात्र येन क्षत्रम्' (TB. III. 7 14. 2ª). इति च।

अथातिधृति.—'सुपर्णोऽसि गरुत्मान्' इत्यादि 'भुव: पते' इत्यन्तम् (VS XII. 4)। कृतिर्वा शाखान्तरे।

होता यक्षद् दुरो दिश: कवष्यो न व्यचस्वतीरश्विभ्यां
न दुरो दिश इन्द्रो न रोदसी दुघे दुहे धेनु:[53] सर:-
स्वत्यश्विनेन्द्राय भेषजं शुक्रं न ज्योतिरिन्द्रियं पय:
सोम: परिस्रुता घृतं मधु व्य[34]न्त्वाज्यस्य होतर्यज॥ (VS. XXI. 34) इति।

'स हि शर्धो न मारुतं तुविष्वणि:' (RV. I. 127. 6ª.) इति। 'व्यूहेन शकुन्तिका मेऽत्रवीद्विपुष्पं धवन्तिका' इति च शाखान्तरे। 'देवा देवेषु पराक्रमध्वम्' (KS. XXXVIII. 12ª) इति च।

अथ कृति:—
त्रिधा हृ घर्मो विभातु मे आकृत्या मनसा सह विराजा
ज्योतिषा सह यज्ञेन पयसा सह क्षत्रेण यशसा।

(46) A drops चात्यष्टिर्वा and adds: ऐन्द्रा शुनं परावत इति। (47) A drops अतिशक्करी वा (48) A drops the illustration : होता यक्षद्दैव्या .. (49) A drops च; M reads : वाजसनेयिना (50) A : प्रायेण भुवेन हविषोऽवसोममिति; M : प्रायेज भुवं भुवेन हविषेति; S : प्रायं भुवं भुवेन हविषे वसोर्म इति। (51) M reads these three illustrations as one, omitting the इतिs (52) M cites the whole *yajus* with corrupt readings (53) A omits this illustration; M reads वामान् in place of धेनु

सह सत्येन तपसा सह तस्य दोहमशीमहि

तस्य सुम्नमशीमहि तस्य मक्ष्यमशीमहि ॥[54] (Ā Śr. V 13 6c) इति।

अथ प्रकृतिः[55]—'भगो अनुप्रयुङ्क्तामिन्द्रो एतु पुरोगवः' (AV. XII. 1 40b) 'यस्यां सदो हविर्धाने यूपो यस्यां निमीयते ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः युज्यन्ते[56] यस्यामृत्विजः सोममिन्द्राय पातवे' (AV. XII. 1. 38.) 'सा नो भूमिर्दक्षिणायां सुशेवो' 'देवो[57] दधातु सुमनस्यमाना' ॥ (AV. XII 1. 44d) इति पञ्चावसानेति।

अथाकृतिः—'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक् च सूर्यं दृशे ॥ (TA. IV. 42. 32) इति[58]।

अथ विकृतिः—'इमे सोमाः सुरामाणश्छागैः। न मेषैः ऋषभैः सुताः शष्पैः। न तोक्मभिर्लाजैर्महस्वन्तः। मदा मासरेण परिष्कृताः। शुक्राः पयस्वन्तोऽमृताः प्रस्थिताः। वो मधुश्चुतस्तानश्विना। सरस्वतीन्द्रः सुत्रामा वृत्रहा। जुषन्तां सौम्यं मधु पिबन्तु। मदन्तु व्यन्तु होतर्यज' ॥[59] (VS XXI. 42b ......) अत्र दशाक्षराः पादा द्वा एकादशाक्षरौ।[60] 'अग्निष्टे हस्तमग्रभीत्' (Ap MB. II 3. 3a.) इति च।

अथ संकृतिः—'देवो अग्निः स्विष्टकृत्। देवान्यक्षद्यथायथम्। होताराविन्द्रमश्विना। वाचा वाचं सरस्वतीम्। अग्निं सोमं स्विष्टकृत्। स्विष्ट इन्द्रः सुत्रामा। सविता वरुणो भिषक्। इष्टो देवो वनस्पतिः। स्विष्टा देवा आज्यपाः। स्विष्टो अग्निरग्निना। होता होत्रे [35] स्विष्टकृत्। यशो न दधदिन्द्रियम्। ऊर्जमपचितिं स्वधाम् ॥ (VS. XXI 58) इति। अत्र त्रयोदश गायत्राः पादाः। षट्कृतिर्वाऽव्यूहेना[61]ष्टाक्षरैः पादैः।

अथाभिकृतिः—'अपूपवान् घृतवानपूपवांश्चरुरेह सीदत्वपूपवान् क्षीरवानपूपवान्दधिमानपूपवान् मधुमान्' (TA. VI. 8. 1.) इत्याद्यभिकृतयः।[62]

अथोत्कृतिः—'छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विना जुषेतां हविः' (VS. XXI. 43) इति। एवं 'सुभेषजम्'[63] (TS. I. 8. 6. 1d.) इति[64] सूक्ते सन्त्युत्कृतयः[65] ॥ (*vide* Ṛ Pr. XVI. 88.)

(54) A quotes only half of the first *pāda.* (55) A: भगानो अनुप्रयुङ्क्तामित्यादि। जे दधातु सुमनस्यमान (56) M : युज्यन्ते। (57) M : मत्रे। (58) A : तच्चक्षुर्देवहितमित्यादि सूर्यं दृश इत्यन्तः ; M : तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरन्ति पश्येमेत्यादि .. ज्योक् च सूर्यं दृशे इति ; S : तच्चक्षुर्देवहितमिति। (59) A & M : सोमम् in place of होतर्यज। (60) A : दशाक्षरा पादा एको दशाक्षरा ; M : अत्र दशाक्षरा पादा। एक एकादशाक्षर; S : अत्र नव दशाक्षरा पादा एकादशाक्षर। (61) A : वा व्यूहेन। (62) A adds : सक्तो वायो द्वे। (63) A & M : सुभेषजे। (64) A M & S : अपि। (65) A: कृतय।

॥ ४ ॥ उक्तं साति मध्यं प्रतिष्ठा सु च ॥ ८ ॥

इमान्यन्यानि पञ्च[66] छन्दांसि। उक्तं नामैकं छन्दः। उक्तमेव साति अतिशब्दसहितमत्युक्तमिति यावत्। द्वितीयं छन्दः। मध्यं[67] नाम तृतीयं छन्दः। प्रतिष्ठा नाम चतुर्थम्। प्रतिष्ठा छन्दःसहिता[68] सुप्रतिष्ठेति। तत् पञ्चमं छन्दः।

क्व[69] पुनरिमानि छन्दांसि प्रतिपत्तव्यानि[70]? न[71] तावदुत्कृतेरुपर्युपरि। प्रतिलोमारम्भविरोधात्[72]। तथा हि[73] प्रातिलोम्येनातिच्छन्दसामारम्भः कृतः। परस्तात् स्थितात्तु[74] उत्कृतेरारम्भाभावः-स्यस्य छन्दस उक्तत्वात्। न चारम्भ[75] परस्तादिमानि छन्दांसि मा भूवन्निति सूचयितुम्। नापि जगतीमधोऽधः स्युः। तत्र त्रिष्टुबादीनामुक्तत्वात्। नापि गायत्रीमधोऽधः।[76] तथापि संख्यानभिधानात्।

अत्राह[77]। ज्ञायत एव संख्या। तथा हि गायत्री चतुर्विंशत्यक्षरोक्ता।[78] तस्याश्चतुर्थ[79]त्यागात्[80] विंशत्यक्षरमुक्तम्।[81] तस्य चतुर्थत्यागात्[82] षोडशाक्षरमत्युक्तम्। एवं द्वादशाक्षरमष्टाक्षरं चतुरक्षरमिति।

नैतद् युक्तम्। [36] यतोऽस्मिन्[83] तन्त्रे पूर्वापरपदार्थसंख्यया संख्यानियमो नाश्रीयते इति पञ्चमाध्याये वक्ष्यते। ततो न गायत्र्याः संख्याग्रहणं[84] युक्तम्। अभिकृत्यादीनां तु 'चतुरश्चतुरस्त्यजेदुत्कृतेः' (P 4/2) इत्यस्मात् संख्याग्रहः। नोत्कृतिसंख्याभावात्।[85] न चैतद्वचनं त्रिष्टुबादीन्यतिच्छन्द[86] गायत्र्या अधस्ताद् विमर्हति।[87] तस्मादज्ञातसंख्यानीमानि छन्दांसीति।

उच्यते।[88] एवं तर्हि प्रथमातिक्रमे कारणाभावादाद्यैवेमानि[89] छन्दांसि स्युः। तेनोक्तं चतुरक्षरमत्युक्तमष्टाक्षरं मध्यं[90] द्वादशाक्षरं प्रतिष्ठा षोडशाक्षरा सुप्रतिष्ठा विंशत्यक्षरेति।[91]

नन्वेवं सति[92] उक्तमेकाक्षरमत्युक्तं द्व्यक्षरं मध्यं त्र्यक्षरं[93] प्रतिष्ठा चतुरक्षरा सुप्रतिष्ठा पञ्चाक्षरेति[94] किं न स्यात्?

उच्यते। 'पादश्चतुर्भागः' (P.4/11) इति वचनाभावात् विशेषणादिमानि[95] छन्दांसि प्रायेण गायत्रीशब्देनैव[96] व्यवह्रियन्ते।[97] क्वचित् 'मा प्रमा प्रतिमोपमा[98] समा'[99] (R Pr. XVII. 19.)

(66) A drops पञ्च। (67) M : मध्यमं। (68) A : प्रतिष्ठाशब्दश्च समस्तो। (69) A drops क्व। (70) A : अवगन्तव्यानि (71) A drops न। (72) A : प्रतिपत्तव्यानि विरोधात्। (73) A : इति; S : तावत्। (74) A : परस्तात् स्थाम्। (75) M & S : समारम्भ। (76) M adds स्युः (77) M : तथाह। (78) A : चतुर्विंशत्यक्षरेयुक्ता। (79) A adds अक्षराणि। (80-82) M drops (81) A adds स्यात्। (83) A : यदस्मिन्। (84) M : संख्याग्रहणं। (85) A : संख्याग्रहणेनोत्कृति-संख्याभावात् (86) A : त्रिष्टुभादिष्वतिच्छन्दस्त्व। (87) M : उपपद्यते; S : अर्हति। (88) M drops (89) A : एतानि। (90) M : मध्यमं। (91) M : विंशाक्षरा इति। (92) A drops सति; M : नन्वेवमपि। (93) M : त्र्यक्षरं मध्यं। (94) M adds एवं। (95) M : वचनाभावात् तानीमानि; S : वचनाभावविशेषणत्वादिमानि। (96) M drops एव (97) A : व्यवह्रियन्ते; M : व्यवह्रियते। (98) M : उपमा। (99) M & S : समा

इत्युक्तानि। क्वचित् 'एवः वरिवः शम्भुः परिभूराच्छः'[100] (VS XV 4, adapted) इति। केचित् कृतिः प्रकृतिः संकृति[101] रभिकृतिरुत्कृतिरित्युक्तानि।

तत्रोक्तम्—'नूनमय' (RV. VIII. 46. 15ᵈ) इत्येकपदेयम्। अथात्युक्तम्—'अग्निर्ज्योतिर्ज्योतिरग्निः' (TB. II. 1. 9. 2.) इति द्विपदा।[102] 'सूर्यो ज्योतिः ज्योतिः सूर्यः' (TB II 1. [illegible] 2) इति, 'इन्द्रो ज्योतिः ज्योतिरिन्द्रः' (KS. XL. 6) इति च।[103] अथ मध्यम—'अग्निर्ज्योतिः सूर्यो ज्योतिः प्रजा ज्योतिः' (TB. II. 1. 2. 11.) इति त्रिपदा। अथ प्रतिष्ठा—'अग्ने पत्नीरिहा वह देवानामुशतीरुप। त्वष्टारं सोमपीतये'[104] (RV. I. 22 9) इत्यत्र त्रिपात्।[105] अथ सुप्रतिष्ठा—'पुरूतमं पुरूणां स्तोतॄणां विवाचि। वाजेभिर्वाजयताम्॥' (RV. VI 45 29) इति त्रिपदा[106]। 'य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं व भक्ष्यासम्' (KS XXXV 3) इति, 'अग्ने हंसि न्यत्रिणम्' (RV. X 118. 1ᵃ.) इति च।

एतामपि मध्यगतानि [37] द्व्यक्षरप्रभृतीनि चतुरुत्तराणि 'राट्[107] विराट् स्वराडणामानि' (cf. RPr. XVII. 5., NS. I 5) छन्दांसि भवन्ति। तथातिच्छन्दसामपि। तत्र द्व्यक्षरं छन्दो बृहदित्ये[108]कपदेयम्।

अथ षडक्षरम्—'जुम्बकाय स्वाहा' (VS XXV. 9ᵈ) इति।[109] एवमन्यत्रापि द्रष्टव्यानि[110]। केचिद् द्व्यक्षरादीनां चतुरुत्तराणां द्विशताक्षरान्तानां मध्यगतानां[111] छन्दसां 'हर्षीका, सर्षीका, मर्षीका सर्वमात्रा[112]' (cf RPr. XVII 20) इत्यादीनि नामानि वर्णयन्ति। तथाऽतिच्छन्दसामपि 'विधृतिः, शक्वरी, अष्टिः, हाना' (cf. NS I 5) इत्यादीनि पृथङ्नामानि[113] वदन्ति॥[114]

## ॥ ४ ॥ अथ लौकिकम् ॥ ६ ॥

एवं तावज्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृतिरतिधृतिः कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिरभिकृतिरुत्कृतिरिति पञ्चदश वैदिकानि[115] छन्दांसि भवन्ति।[116] अष्टाचत्वारिंशदक्षरादि[117] चतुरुत्तराणि चतुःशतान्तानि उक्तानि। तथा उक्तमत्युक्तमध्यं प्रतिष्ठा सुप्रतिष्ठेति च पञ्च चतुरक्षरादीनि चतुरुत्तराणि विंशत्यक्षरान्तानि उक्तानि।[118] एषु विंशतिषु छन्दःसु लौकिकमपि रूपमस्ति। तच्च पञ्चमाध्यायादौ वक्ष्यते॥

(100) A · क्वचिदेवो परित्र शम्भुरादिति ; M क्वचिदेवो वरित्र शम्भु परिभू परिभूराद्दिति ; S क्वचिद्देवो परिवशम्भुरान्नितिः। (101) A drops प्रकृति ; M drops प्रकृति। (102) A adds तथा। (103) A & M drop च। (104) A reads अग्ना ई पत्नीवासुमजोर्देवेन त्वष्टा सोम पिब, M reads ; अग्नायो पत्नो वाम्सजूर्देवेन त्वष्टा सोमं पिबा ; S अग्ने पत्नीव हद्देवानां देवेन त्वष्टा रसमपि वत। (105) इति त्रिपदा in all the MSS (106) A adds एव। (107) A drops राट्। (108) A · बृहती। (109) A adds द्विपदेयम्। (110) A एवमन्यान्यपि , M adds इति। (111) M reads षड्विंशाने in place of मध्यगतानां। (112) A omits the last two names ; M : धर्ममात्रा। (113) M drops. (114) M & S वर्णयन्ति। (115) A वै कृतानि (116) A drops भवन्ति। (117) A & S : क्षरादीनि। (118) A drops उक्तानि।

|| ४ || आ त्रैष्टुभात् यदार्षम्[119] || १० ||

यानि चार्षाणि छन्दांसि चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि चतुश्चत्वारिंशदक्षरान्तानि आ त्रैष्टुभाच्छन्दांस्युक्तानि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुबिति. तेष्वपि षट्सु लौकिकमपि लभ्यते। ऊर्ध्वमपि सर्वत्र लौकिकमित्यधिक्रियते।

[38] || ४ || पादश्चतुर्भागः || ११ ||

उक्तादिषूत्कृत्यन्तेषु षड्विंशतौ छन्दःसु [120]वक्ष्यमाणेषु च मात्राछन्दःसु[121] समविभक्तेषु[122] च चतुर्थो भागः पाद इति ज्ञेयः। तेनोक्तस्यैकमक्षरं पादः गायत्रस्य षडक्षराणि जागतस्य द्वादश[123] उत्कृतेः षड्विंशतिः।[124] अत एवोक्तादीनि एकाक्षरं द्व्यक्षरं त्र्यक्षरमिति व्यवह्रियन्ते। प्रयोजनं चास्य सूत्रस्य मात्रासमकतनुमध्यादिषु। पादमात्रस्य लक्षणे कथितेऽन्येषामपि तादृशानां पादानां ग्रहणम्॥

|| ४ || यथावृत्तसमाप्तिर्वा || १२ ||

अथवा समविभागासम्भवे[125] न्यूनाधिकैरपि पादैर्यथा वृत्तस्य चतुष्पाद एव समाप्तिः सम्भवति तथ तादृश एव चतुर्थो भागः पादः। तेन वैतालीयादिषु द्वयो[126] न्यूनाधिकयोः पादयोर्लक्षणे कथिते तादृशौ द्वावन्यावपि पादौ द्रष्टव्यौ।

पदचतुरूर्ध्वे चतुर्भ्य ऊर्ध्वा चत्वार एव पादाः। द्वयानि खलु छन्दांसि वर्णजातयो मात्राजातयश्चेति। तत्रोक्तादय उत्कृत्यन्ता वर्णजातय उक्ताः। वक्ष्यन्ते च। मात्राजातयः पुनरार्यादय इदानीं प्रक्रियन्ते। तासु च काश्चित् वेदेऽपि दृश्यन्ते। तथा चाथर्वणिकाः श्लोकमार्यागीतीयमामनन्ति—

घृतमिव पयसि निगूढं
भूते भूते च वसति विज्ञानम्।
सततं मन्थयितव्यं[127]
मनसा मन्थानभूतेन॥[128] (Br. Bind. Up. 20) इति।

मात्राजातयोऽपि द्वयम्—गणजातिर्निर्गणजातिश्चेति।
गणजातिमार्यां प्रस्तोष्यन् गणसंज्ञां[129] कथयति—

[39] || ४ || लः समुद्रा गणः || १३ ||

'लः' लघवः समुद्राश्चत्वारश्चतस्रो मात्रा इति यावत्। ता गणसंज्ञा भवन्ति।
स च गणः पञ्चधा प्रयोक्तव्य इत्याह—

(119) A: त्रैष्टुभाच्च यदार्षम्। A drops the words between 120 & 121 (122) M. समपि भक्तेषु। (123-124) A drops. (125-126) A drops due to haplology. (127) A: मथयितव्यम्; M: संमथयितव्यम्। (128) M: मना मन्थानभूतेन; A: मं थानभूतेन (129) M: [illegible]।

॥ ४ ॥ गौ मन्तमध्यादिर्लश्च ॥ १४ ॥

गौ गन्तो गमध्यो गादिर्लश्च। गौ गुरू द्वौ कदाचिद् गणोऽसौ भवति। गुर्वन्तो वा त्रिकः 'स'-गणः। गुरुमध्यो वा 'ज'-गणः। गुर्वादिर्वा 'भ'-गणः। चत्वारो[130] लघवो वाऽसौ भवति। पञ्चधाऽपि चतुर्मात्र एव गुरोर्द्विमात्रत्वात्। 'लौ ग' इति द्वयोर्मात्रयोः स्थाने एकस्य गुरोरुक्तत्वात्। ननु 'लश्च' इति पुनर्ग्रहणमनर्थकं 'लः समुद्रा गण' इत्युक्तत्वात्। नानर्थकं तस्य मात्राविधानार्थत्वात् अस्य च लघुप्रयोगार्थत्वात्। एतेन पञ्चप्रकारेण[131] गणेन आर्याः कर्तव्याः[132]।

अथार्यालक्षणमुच्यते। तत्र[133] गाथाजातयश्चतस्र[134] इति।

तत्र गाथा तावत्—

॥ ४ ॥ स्वरा अर्धञ्चार्यार्धम् ॥ १५ ॥

'गण' इति वर्तते। वचनं विपरिवर्तते। स्वराः सप्तगणा अर्धञ्च गणस्यार्धं श्लोकस्यार्धं स्यात्। साऽऽर्या नाम जातिर्भवति। 'गाथा' नामैवार्या शास्त्रान्तरेषूक्ता। गणानां सप्तानां प्रत्येकं पूर्वोक्तैः पञ्चभिः प्रकारैः प्रयोगे प्राप्ते इदमाह—

॥ ४ ॥ अत्रायुङ् न ज् ॥ १६ ॥

अत्रार्यायामयुक् अयुजो[135] गणाः प्रथमस्तृतीयः पञ्चमः सप्तमश्च जो मध्ये गुरुर्न कर्तव्यः। ततश्चैते गणाश्चतुष्प्रकाराः[136] शेषाश्च पञ्चप्रकाराः[137]।

[40] ॥ ४ ॥ षष्ठो ज्[138] ॥ १७ ॥

षष्ठो गणो 'जो' मध्ये गुरुरेव नियमेन भवति। प्राप्तस्य वचनं नियमार्थम्।

॥ ४ ॥ न्लौ वा ॥ १८ ॥

नगणाश्चिलघु लघुश्चैक इति चतुर्लघुर्वा[139] षष्ठो गणः।

॥ ४ ॥ न्लौ चेत् पदं द्वितीयादि ॥ १९ ॥

षष्ठो गणो न्लौ चेत् चतुर्लघुश्चेत् पदं द्वितीयाक्षरादि पृथक्[140] प्रवर्तयेत्। षष्ठगणस्य द्वितीयमक्षरं प्रथमश्च एकः शब्दो न स्यात्। द्वितीयमक्षरमन्यस्य शब्दस्या[141]दिरेव स्यादित्यर्थः॥

॥ ४ ॥ सप्तमः प्रथमादि ॥ २० ॥

सप्तमो गणो न्लौ चेत्[142] प्रथमाक्षरादि प्रवर्तयेत्। प्रथमाक्षरं शब्दस्यादिरेव स्यादित्यर्थः॥

(130) A drops चत्वारो। (131) A drops पञ्च। (132) A कार्या। (133) M तास्च ; S ता च ; M adds पञ्चतथ्य। (134) M & S गायागीतयश्चतस्र। (135) A अयुग्मो। (136-37) A omits. (138) M & S ज। (139) A न्लौ। (140) A drops पृथक्। (141) A drops शब्दस्य। (142) A adds चतुर्लघुश्चेत् पदं

॥ ४ ॥ अन्त्ये पञ्चमः ॥ २१ ॥

'अर्धम्' इत्यनुवर्तते। विभक्तिविपरिवर्तते। अन्त्येऽर्धे पञ्चमो गणो न्लौ चेत् पदं प्रथमाक्षरादेव स्यात्॥

॥ ४ ॥ षष्ठश्च ल् ॥ २२ ॥

चकारादन्त्य इत्यनुवर्तते। अन्त्येऽर्धे षष्ठो गणो लघुरेवैकः स्यात् न चतुर्मात्रः। इदं गाथालक्षणम्। तत्रोदाहरणम्—

वन्दे मातरमार्यां वाणीं वर्णाभिमानिनीं देवीम्।
यामेव विदुरुपास्यां परासु[143] गाथासु पथ्यासु॥

न्लौ वा नौ चेत् पदं द्वितीयादीत्युक्तम्[144]। तद्यथा—

निजमुखविपुलप्रतिबिम्बवति तमिव[145] हारतरलतारेषु[146]।
[41] वीक्षितुमासीनोरसि भर्तुर्जगदखिलमवतु रमा॥

॥ ४ ॥ त्रिषु गणेषु पादः पथ्याद्ये च ॥ २३ ॥

त्रिषु गणेषु आद्येषु पादः क्रियते। आद्ये प्रथमेऽर्धे, चकारादन्त्ये च। सा गाथा 'पथ्या' नाम भवति। पूर्वमर्धस्य लक्षणविधानात् पादसद्भावाभावो नोक्ताविति वचनम्। तेनाप्याद्य एव श्लोक उदाहरणम्।

॥ ४ ॥ विपुलाऽन्या ॥ २४ ॥

अन्या गाथा 'विपुला' यस्यास्त्रिषु गणेषु पादो न क्रियते। सा च 'पूर्वं मुखपूर्वे'त्यादिना वक्ष्यमाणन्यायेन मुखादिविशेषणत्रयस्यात्रापि सम्बन्धसद्भावात् त्रिधा विपुला। मुखविपुला, जघनविपुला, महाविपुला चेति।[147] तत्र 'मुखविपुला' सा यस्या न पूर्वार्धे पादव्यवस्था। यथा—निजमुखविपुलप्रतिबिम्बेत्यादि (loc. cit) श्लोकः। यस्या नोत्तरार्धे सा 'जघनविपुला'—

सा जयति जघनविपुला गौरी यस्या जितस्मरोऽपि हरः।
दिक्सङ्गतो[148] द्वितीयत्वमपि न सहतेऽद्वितीयायाः॥

यस्या उभयोरर्धयोः सा 'महाविपुला'। यथा—

विभजन् वेदांश्चततः ककुभ इवाम्भैश्चतुरः स विजयते।
यस्माल्लब्धवरस्यैव जनस्यैते[149] महाविपुलाः॥

॥ ४ ॥ चपला द्वितीयचतुर्थौ गुर्मध्यौ जौ ॥ २५ ॥

द्वितीयचतुर्थौ गणौ जौ मध्यगुरू स्याताम्। तदा गाथा 'चपला' नाम भवति। तौ च मध्ये गुरू गणौ मध्यौ गुरोर्मध्यगतौ स्तः। ततश्च प्रथमो गणो गुर्वन्त एव स्यात्। तृतीयो गुरुरेव द्विः। पञ्चमो गुर्वादिरेव। इत्येवं गुर्वोर्मध्यगतौ जौ भवतः॥

(143) A: पथ्यो। (144) A: द्वितीयादीत्याद्युक्तम्; M: द्वितीयादीक्तम्। (145) A: प्रतिबिम्बवद्रुचिनिभ (146) M: तारतरलं भारेषु; S: तारतरलभारेषु। (147) A adds केचित्। (148) A: ऐक्यं गतो (149) M: जनस्य ते।

[42] ॥ ४ ॥ पूर्वे मुखपूर्वा ॥ २६ ॥

पूर्वार्धे चेदिदं चपलालक्षणं तदा मुखशब्दपूर्वा चपला भवति । मुखचपलेति यावत् ॥

॥ ४ ॥ जघनपूर्वेतरत्र ॥ २७ ॥

इतरत्र द्वितीयार्धे चेदिदं चपलालक्षणं तदा 'जघनपूर्वा' चपला भवति । जघनचपलेति यावत् ॥

॥ ४ ॥ उभयोर्महाचपला ॥ २८ ॥

उभयोरप्यर्धयोश्चेदिदं चपलालक्षणं तदा महाचपला । एतास्तिस्रोऽपि पथ्यया विपुलाभिश्च सहैव भवन्ति । ताश्च प्रत्येकं चतसृभिः सम्पर्कान्चतुर्धा चतुर्धेति द्वादशचपला । केवला[150]श्चतस्र इति षोडशचपलाः । तत्र पथ्यामुखचपला—

देवाधिनाथ नाथं हरिं पुराणं विनैव भगवन्तम् ।
या स्तौत्यन्यजन्मतः सा नष्टा सैव[151] मुखचपला ॥

अथ मुखविपुला जघनचपला—

भगवति भवव्याधिभिषजि निष्ठां[152] विनाऽस्ति का दयिताः ।
यदमी जना विना तामुपासते जघनचपलां स्त्रीव ॥

अथ जघनविपुला महाचपला—

आस्तां विमुक्तिरेताः स्त्रियोऽपि रत्याः कथं महाचपलाः ।
सेवां विना गिरीशस्य बालरामा इव श्वश्रूम् ॥
एवमन्या अपि द्रष्टव्याः ।

इदानीं गीतयोऽधिक्रियन्ते ।

॥ ४ ॥ आद्यार्धसमा गीतिः ॥ २९ ॥

आद्येनार्धेन समा यदि सर्वा स्यात् तदा गीतिः । आद्येनार्धेन साम्यं चार्याया आद्येनार्धेन अन्त्यस्य साम्यम् । आद्यार्धे षष्ठो गणो 'जो' वा 'न्लौ' वा स्यादित्युक्तम् । [43] अन्त्येऽर्धे षष्ठश्च 'ल्' इति लघुमात्रत्वं विहायान्त्येऽपि[153] षष्ठो 'जो' वा 'न्लौ' वा स्यात् सा गीतिः । [154]प्रथमे च लघुशब्दस्य प्रथमादित्वनियमो न स्यात्, सप्तमे सर्वलघुश्च स्यात् ॥[155]

॥ ४ ॥ अन्त्येनोपगीतिः ॥ ३० ॥

अन्त्येनार्धेन यद्यस्य समः स्यात् । आद्येऽप्यर्धे षष्ठो गणो लघुमात्र एव । पञ्चमे च सर्वलघौ शब्दस्य प्रथमादित्वनियमः[156] स्यात् तदा उपगीतिः ॥

(150) A adds च पथ्यादय । (151) M : सा कष्टा सैव; A : सा कष्टायैव । (152) A drops निष्ठां M : निर्मुक्ति निष्ठां । (153) A - लघुमात्र उक्त । यदि लघुमात्रत्वं विहाय (154-55) A drops ; S drops सप्तमे सर्वलघुश्च स्यात् । (156) A : प्रथमादि पर ।

## ॥ ४ ॥ व्युत्क्रमेणोद्गीतिः ॥ ३१ ॥

व्युत्क्रमेण पूर्वार्धे षष्ठो गणो लघुमात्र उत्तरार्धे षष्ठो 'जो' वा 'न्लौ' वा स्यात् तदा[157] उद्गीतिः। एतास्तिस्रो गीतयो[158]ऽपि पथ्यया विपुलादिभिश्च संयुज्यन्ते। ततः षोडशभिः सम्बन्धात् प्रत्येकं षोडशधा इत्येता अष्टचत्वारिंशत्। गाथाश्च षोडशेति चतुःषष्टिरार्याः। तत्र 'पथ्यागीतिः'—

गायति गीतं काचित् कलकण्ठी[159] वीणया समं सलयम्।
एकाधिपतिर्धात्र्या वीरो रामो बभूव राजेति॥

मुखविपुलोपगीतिः —

अन्योपगीतिमाकर्ण्य कृतेर्ष्या गायति वयस्या।
एकाधिपतिर्धात्र्या दिवश्च[160] कृष्णो बभूवेति॥

जघनविपुलोद्गीतिः—

उद्गातयुद्गीतिं प्रतवति शस्त्रे सुरास्ते[161] च।
श्रुत्वा महयमसान् सदसि महयन्तोऽर्चयन्ति हरिमार्याः॥

एवं चपलाभिरपि गीतीनां योगः स्यात्। तत्र पथ्यामुखचपलादिभिर्गीतिः —

अन्ये सममसमर्थं समर्घ्य दानेन[162] तोषयन्ति हरिम्।
भगवत्समचपला मुखचपला गीतिं वितन्वते पथ्याम्॥
(जघनविपुला मुखचपला गीतिः)

अन्ये कुचमुखविपुलासु गीतिषु रत्तासु जघनचपलासु।
सक्ता हरावसक्तास्त्वधोमुखा[163] यान्ति दुर्गतिं मूढाः॥
(महाविपुला गीतिः)

अन्ये तु गीतिरम्याः विना महाचपलजघनविपुला स्त्रीः।
[44] भगवन्तमेव संसाररोगवैद्यं भजन्ति शरणमिव॥[164]
(जघनविपुला महाचपला गीतिः)

एवमन्या[165] द्रष्टव्याः।

## ॥ ४ ॥ अर्धे वसुगणा आर्यागीतिः ॥ ३२ ॥

गाथायाः गीतीनां चार्धे वसुगणे वसवोऽष्टौ गणा यस्मिन् सा स्वार्यागीतिर्नामार्या भवति। तत्रापि गाथादीनां पूर्वार्धे अष्टगणे मुखार्यागीतिः, उत्तरेऽर्धे जघनार्यागीतिः, उभयोर्महार्यागीतिरिति रुद्रटः। शास्त्रान्तरे पुनरासां पृथक् संज्ञा उक्ताः[166]। उक्तया गीत्या सहार्यागीतिः सा महार्यागीतिः। स च स्कन्धः।[167] यथैव या गाथया सह साऽवस्कन्धा उपगीत्या सह सोपस्कन्धा योद्गीत्या सह उत्स्कन्धा। या मुखार्यागीतयो जघनार्यागीतयश्च, ताः सङ्कीर्णा इति। एवं गाथादीनां

(157) A: सा च। (158) A drops गीतयः। (159) A: अनुकर्णी। (160) M: दीनश्च। (161) M: सुरान्ते। (162) A: समाज्य मानेन; S: सभाजयमाने। (163) A: स्मरातुरा। (164) M & S शरणमिमं। (165) A adds अपि। (166) A drops उक्ताः। (167) M & S drop the sentence.

भेदैश्चतुःषष्ट्या पूर्वापरोभयार्धभेदेन त्रय्यात्[168] प्रत्येकं त्रिधा इति अष्टोनशतद्वयमार्यागीतिप्रकाराणाम् । शतभेदाश्चतुर्नवतिरिति द्वे शते द्विपञ्चाशच्चार्या[169]भेदाः । एते च मद्यभेदाः एतेषामेकैकस्मिन्नपि प्रस्तीर्यमाणे[170] एकैका कोटिः सम्पद्यते । तत्र पथ्यागीतिर्महार्या[171] गीतिः —

कुर्वन्त्यार्यागीतिं सदात्मनि सनातनं हरिं भगवन्तम् ।
परमेशान्तः शान्तः क्षान्त उपरतः समाहितो भूत्वेति ॥

मुखविपुला मुखचपला[172] गाथामुख्यार्यागीतिः —

भगवन्तमेव साधिष्ठ[173]वंशजं स्तोष्यतां[174] पथि विपन्ना मृत् ।
इति खल्वार्यागीतिं कुर्वन्ति मनोरथनापन्नाः ॥

जघनविपुला जघनचपलोद्गीतिः जघनार्यागीतिः—

एवञ्चार्यागीतिं कुर्वन्तोऽत्र[175] महामनोराज्ये ।
धर्मार्थकाममोक्षेषु वर्तिनी महितोमन्यतमस्मिन्निति ॥[176]

महाविपुला महाचपलोद्गीतिर्महार्यागीतिः —

वक्ष्यामि येन धर्मार्थकाममोक्षाणि होराहरणे ।
[45] वाचं ममोपशृण्वन्तु पुत्रकस्येव वल्गुमार्यागीतिम् ॥

एवमन्येऽपि प्रकारा द्रष्टव्याः । इत्यार्याजातिः ।

अथ निर्णयशानयोऽद्धापि किमन्ते—

॥ ४ ॥ वैतालीयं द्विः स्वरा अयुजो युग्वसवो ल्गौः ॥ ३३ ॥

'वै' इत्यनुवर्तते 'पाद' इति च । द्विः स्वराः द्विःसप्तकाः सप्तलघवः चतुर्दशमात्रा इति यावत् । अयुक्पादः प्रथमस्तृतीयश्च । युक्पादः द्वितीयश्चतुर्थश्च द्विर्वसवः षोडशमात्राः स्युः । सा वैतालीयं नाम जातिः । षट्स्वेव चतुर्दशसु च मात्रासु कश्चिन्नियममाह । 'अन्ते ल्गौ' इति ।

अन्ते पादानां 'रलगा'[177] एव नियमेन कार्याः ।[178] र-गणो मध्यलघुः ।[179] अत्र श्लाविस्तधि-कारात्पुरतो लघवश्च यथाक्रमं प्रयोक्तव्याः । तत्रापि 'लौ ग' इत्युपतिष्ठते । तत्रापि द्वयोर्मात्रयोः स्थाने एको गुरुः स्यात्—

महति तपसि सक्तचेतसो-
ऽतिधन्याः सन्त्यनेकसम्पदः ।
शुद्धाः प्रकटास्थिपञ्जरा
वैतालीयमनु विजन्वते ॥

(168-69) A drops the lines. (170) A प्रस्तार्यमाणे । (171) A : मुख्यार्या । (172) M drops मुखचपला (173) M : धर्मिष्ठ । (174) A M & S : नो स्ततां । (175) A : कुर्वन्ति न । (176) A : महान्य-तमस्मिन् ; M : महान्यतमेन् स्तुर्यादिति ; S : महितो मतस्मिरा । (177) A : लघुर्गुरुश्च । (178-79) A drops the words.

## ॥ ४ ॥ औपच्छन्दसिकम् ॥ ३४ ॥

अन्त इत्यनुवर्तते।[180] एषामेव वैतालीयपादानामन्तेऽन्योऽपि गुरेको भवेत् सा औपच्छन्दसिकं नाम जातिः —

परस्परं परेषु मीलिताक्षाः
निभृताङ्गाश्च रहस्यमीष्टचेष्टाः।
चरितं परिमोहन परेषा-
मौपच्छन्दसिकं खलाश्चरन्ति ॥

## ॥ ४ ॥ आपातलिका भो गौ ॥ ३५ ॥

आस्वेव चतुर्दशसु षोडशसु च मात्रासु अन्ते भो गुरू च द्वौ नियतौ स्युः। सा आपातलिका नाम जातिः —

अयन[181] प्रतिनोदिवमेको
यास्यति चरितैर्दुर्गतिमन्यः।
सम्प्रति भेदं चरतो द्वा-
वापातलिका निष्कसितान्ता ॥
आपातलिका स्थालीत्यर्थः ॥

## [46] ॥ ४ ॥ शेषे परेण युङ् न साकम् ॥ ३६ ॥

वैतालीयादीनां पादान्ते 'रगौ' इत्यादि नियमः कृतः। अयुक्पादस्यादौ षण्णां मात्राणां युक्पादस्य चाष्टानां नियमो न कृत इत्यारम्भः। शेषे पदादौ परेण लघुना परया मात्रया युग्लघु द्वितीयश्चतुर्थः पञ्चश्च। न साकं न सहैकीभवति। नैकेन गुरुणा युग्मां मात्रां परया मात्रया युञ्ज्यात्। तयोः स्थाने नैको गुरुः स्यादित्यर्थः। पूर्वया[182] तु युञ्ज्यादेव। तथा च—निधिन्नस्यन्त्यप नैकसम्पदः[183] इत्यादि कृते—

## ॥ ४ ॥ षट् चामिश्रा युजि ॥ ३७ ॥

चकारो नेत्यनुकर्षणार्थः। युक्पादे द्वितीये चतुर्थे चाद्यास्वष्टसु मात्रासु षण्मात्रा अमिश्रा गुर्वेकीभूता[184] न कर्तव्याः। निरन्तराः न षट् लघवो कर्तव्याः। अयुजि तु[185] क्रियन्ते एव। तथा च 'महति तपसि' इत्युक्तम्।

## ॥ ४ ॥ पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः ॥ ३८ ॥

युजीत्यनुवर्तते। पञ्चमेन लघुना पूर्वो लघुश्चतुर्थः सहैकीभवेत्। युजि पादे चतुर्थपञ्चम्यौ मात्रे एकेन गुरुणाऽधिक्रियेयाताम्। प्राच्यवृत्तिर्भवति। 'शेषे परेण युङ् न साकम्' (IV.36) इत्यस्यायमपवादः॥

(180) A omits the sentence. (181) M: अयनं। (182) M: पूर्वया (183) A. धन्या सम्प -मनैकसम्पद ( 184-85) A drops the words

॥ ४ ॥ अयुक् तृतीयेनोदीच्यवृत्तिः ॥ ३९ ॥

अयुजः पादस्य तृतीयेन लघुना पूर्वो द्वितीयः सहैकीभवेत् उदीच्यवृत्तिः ॥[186]

॥ ४ ॥ आभ्यां युगपत् प्रवृत्तकम्[187] ॥ ४० ॥

आभ्यां लक्षणाभ्यां युगपदेकत्र कृताभ्यां प्रवृत्तकं भवति। युजोः पादयोर्मागवद्ग्रहणमिति।[188] आभ्यां प्रवृत्तकमित्येतावद्वक्तव्यमिति। पुनर्युगपद्ग्रहणं [47] क्वचिदयुक्पादविलक्षणानां प्रवृत्तिं सूचयितुम्। तेन त्रिधा[189] चारुहासिन्यादिषु अयुक्पादविलक्षणप्रवृत्तिसिद्धिः। एतानि प्राच्योदीच्यवृत्तिप्रवृत्तकानि वैतालीयादिभिः सहैव भवन्ति। तेन तानि नव वैतालीयाद्यास्तिस्र[190] इति द्वादश। तत्र वैतालीयप्राच्यवृत्तिः—

न विपन्ने च लोकगर्हणीयप्राच्यवृत्तिमुपजीवता नृणाम्।
अविवादमगर्हितां बुधैः पितृपैतामहपरम्परागताम्॥

औपच्छन्दसिकोदीच्यवृत्तिः —

उदीच्यदिग्देशु मानवानामेनेनैव निरूप्यते प्रवृत्तिः।[191]
यद्वत् सविताऽप्युदीच्यवृत्तिः मीनं मेषवृषौ मृगञ्च मुङ्क्ते॥

आपातलिकाप्रवृत्तकम्—

स हास्यतुपयात्यति लोके यो रमेत वनितासु तपस्वी।
प्रवृत्तकमसद्वर्गयोग्यं चापलादिव चरन् पलिताङ्गः॥

आपातलिकाप्राच्यवृत्तिः —

जातह्रीका बहुराणां[192] प्राच्यवृत्तिमनुचिन्त्य बुधा स्वाम्।
बाल्ये यत् सततमवहेलं[193] ग्राम्यवागनुचितं च कुवृत्तिम्॥

कैश्चिदुत्तानलिकेत्यस्याः संज्ञोक्ता॥

॥ ४ ॥ अयुक् चारुहासिनी ॥ ४१ ॥

वैतालीयादीनामयुक्पादलक्षणं यद्युक्तस्य चतुर्ष्वपि पादेषु स्यात्। सा चारुहासिनी जातिः। अयुजश्च पादस्य लक्षणद्वयमुक्तम्—मात्राद्वयस्याधिक्यत्व[194]मुदीच्यवृत्तित्वञ्च। तद्यदि चत्वारोऽपि पादा न्यूनमात्रा उदीच्यवृत्तिलक्षणा वा उभयात्मका वा स्युः चारुहासिनी सा स्यात्। सा च वैतालीयादिषु प्रत्येकं त्रिधा भित्त्वेति नवधा स्यात्। वैतालीयादयश्च द्वादशेत्येकविंशति प्रकाराः। तत्र वैतालीयादिपादैर्न्यूनमात्रैर्यथा—

दशनद्युतिचारुहासिनी स्तनविनतवलग्नमन्थरा।
त्रिजगत्प्रसभः सुराङ्गना [48] तेनानुमिता[195] फलोन्नतिः॥

(186) A adds भवति। (187) M: प्रवर्तकम्। (188) A प्राच्यवृत्तिलक्षणमिति। (189) A omits त्रिधा। (190) M: चतस्र (191) A: वृत्तिः। (192) A: धुन्वन्ति हि या मुहुरङ्ग। (193) M & S: अवहेलं। (194) A: मात्राद्वयन्यूनत्वं। (195) A & S: तेनानमिता।

एतामुत्तरान्तिकेति केचित्। अथ सोदीच्यवृत्तिलक्षणैः—

बभूव जनकोऽपि यां वधूं निरीक्षितुमनुदिशं चतुर्मुखम्।
न साऽपि शशि[196] चारुहासिनी निरीक्ष्यते मुनिभिस्तपस्विभिः॥

दक्षिणान्तिकेत्येके। अथोभयात्मकैः पादैः —

तपोविपरिणाम[197] एष यदनानि विपुलानि वान्धवाः।[198]
वधूश्च मदचारुहासिनी परञ्च कुशलं विपश्चिताम्॥

एवमौपच्छन्दसिकापातलिकयोर्द्रष्टव्यम्। अथापातलिकापादैर्न्यूनमात्रैः —

हा तात हे भ्रातः पुत्रावित्युक्तगिरां नरकेषु।
स्मरत नराणामघभाजां चरत च[199] धर्मं दुरितारिम्॥

अवपातलिकेत्येके। चारुहासिनी नाम युग्मलक्षणत्वात् युग्मेष्वपि पादेषु निरन्तराः षड्लघवः प्र...म्॥

॥ ४ ॥ युगपरान्तिका ॥ ४२ ॥

वैतालीयादीनां युक्पादलक्षणं सर्वेषु पादेषु स्यात्। सा चापरान्तिका। युक्पादलक्षणं द्विविधम्—मात्राद्वयस्याधिक्यं प्राच्यवृत्तित्वञ्चेति। यद्यदि मात्राधिका वा सा प्राच्यवृत्तिलक्षणा वोभयात्मिका वा पादाः, तदाऽपरान्तिका। एषा पूर्ववच्चतुर्धेति त्रिविधप्रकारा वैतालीयादीनाम्। तत्र वैतालीयपादैर्मात्राधिकैर्यथा—

न मुनिर्लोचनगोचरो वरोऽङ्गनितानां मदलोलचक्षुषाम्।
भूत्वा ता हि[200] किलापरान्तिकाः तच्चित्तं लघूकर्तुमीशते॥[201]

एषाऽपि दक्षिणान्तिकेत्येके। अथ सा प्राच्यवृत्तिलक्षणैः —

न परिष्टजीवितस्तया नोपलब्धविभवाऽपरान्तिका।
कामुकीव[202] स्पृगर्हणा किन्तु मोहयति केवलं जनम्॥

पूर्वान्तिकेति केचित्। अथोभयात्मकैः —

या परान्तिका सा परकान्ता सा न तस्य तप एव रणद्धि।
अपि तु कीर्तिमपमार्ष्टि मतिञ्च प्राणमप्यवरुणद्धि कदाचित्॥

उत्पातलिकेति केचिदिति।

[49] अथ मात्राधिकैः पादैः —

क्व मुनिर्भवनेष्वाप्तवासः[203] क्व च वनितास्तनतारविहारः।
जहिहि वरारोहास्त्व[204] मुक्तं यदि तपसे स्पृहयेत्तव चित्तम्॥

नलिनमिति केचित्। शेषाश्च द्रष्टव्याः।

(196) A drops न सापि शशि। (197) M: तपोविपरिणाम। (198) S: बान्धवा। (199) M: विचरत। (200) M: तर्हि। (201) M: लघुगुरुणा चित्तान्यपहर्तुमीशते। (202) A: कामुकी स; M: कामुकी न। (203) A: मुनिभवनेषु वसतवासः, M: भवनेष्वाप्तवास। (204) A: परासु स्त्रीषु।

अयुजेष्वपि पादेषु यथाप्रोक्तं 'षट् चामिश्रा युजी'ति द्रष्टव्यम्। युग्मपादलक्षणत्वात् अपरान्तिकानामपि च—

स तरस्यति[205] यस्य योषितां नयनश्रोर्न्नं करोति कौतुकम्।
अपि तापधना[206] सुवर्चला कुसुमश्रीरिव सुप्रबोधिता॥

इतीदमर्धसमाधिकारे सुवर्चलेति केचित्। अन्ये तु प्रबोधितेति नामेति। अस्मिंस्तु शास्त्रे वैतालीयप्रकार एवार्धसमाधिकारः स्यात् सूत्राभावात्। तथा—

अलका बद्धा वराङ्गनानां मुहनालीननमा[207] मुहुर्विमुक्ता।
विमलध्वतिमेदुराः पुमांसः हृदयस्थास्तपसो निवर्तयन्ति॥

इदमपि तत्रैवार्धसमं विमलध्वनिरिति नाम वृत्तमिति केचित्। अस्मिन् शास्त्रे औपच्छन्दसिकमेव। इति वैतालीयजातिः॥

॥ ४ ॥ गन्ता द्विर्वसवो मात्रासमकं लनवमः ॥ ४३ ॥

इः, पादः, शेषे परेण युङ्नेति चानुवर्तते। गन्ता गुर्वन्ता द्विर्वसव द्विष्कृता अष्टौ वसवः षोडशमात्रा इति यावत्। सा एकपादे स्युर्मात्रासमकं नाम जातिः। तत्र नवमो लघुरेव। नवमो मात्रा लघुनैव क्रियते न गुरुणा। अत्र तुल्या एव चत्वारोऽपि पादाः—

तिष्ठतु तावद्दिवसां सुकृतं
सुकृतकृतं लघुचपलं[208] प्रेत्य।
यशोऽप्यधुनाऽपि मुहुरुज्ज्वलतः
का वा मात्रासमकं किं वा॥

यद्यपि 'गन्त' इति युग्मयोर्गुर्वन्त [50]-त्वं सिद्धमेव, तथाप्ययुग्मयोर्न सिद्धम्। उक्तम्। तेन चतुर्णां पादानामन्ते द्वयोर्मात्रयोः स्थाने गुरुरेकोऽवश्यं कर्तव्यः। अत्र गणविधानाभावेऽपि चतसृभिर्मात्राभिरायीणामिव गणमभ्युपगम्य विवेक उच्यते। 'शेषे परेण युङ् न साक'मित्यधिकारात् सर्वत्र जगणो न कर्तव्यः। तत्र पादानामाद्यो गणश्चतुर्धैव भवति। द्विगो गान्तो गादिश्चतुर्लघुश्चेति। द्वितीयश्चेति त्रिनवमश्चेति चतुर्लघुत्वे संज्ञान्तरस्य वक्ष्यमाणत्वात् त्रिधैव भवति। नवमस्य लघुत्वनियमात् गान्त एव चतुर्थो गन्ता इत्युक्तत्वात्। 'द्विगो गान्तश्चे'ति॥

॥ ४ ॥ द्वादशश्च वानवासिका ॥ ४४ ॥

एतास्वेव लघुनियमासु द्वादश्यपि मात्रा लघुरेव स्यात्। सा वानवासिका नाम—

वाल्यत एव स्वयमपि दूरा-
दानेन महो विकचाम्बुमनसाम्।
एवं यशसा भुवि सुकृतानां[209]
वयाम्यत एव स्वयमपि नमः[210]॥

(205) A: म च पश्यति। (206) M & S: अम्बोति पता। (207) A: कुटिला नीलतमा। (208) M: लघुचपलं। (209) A: सुकृतजनो। (210) A: स्वयमतिसा भू; M: स्वयमपि सत्म।

अस्यास्तृतीयः सर्वलघुरेव। केचित्तु गुरुमध्यमपीच्छन्ति। तथाऽपि विश्लोके गुरुमध्यं द्वितीयं त्रिधात्रं तृतीयञ्च। नैतदाचार्यस्य पिङ्गलनागस्य मतं, यतः शेषे परेण युङ् न साकमित्यनुवर्तते। तच्चात्राद्युङ् न जित्यश्च (IV 36) ग्रहणेन सिद्धम्। तद्धि परस्तादनुवृत्तिं वारयदितरेषामनुवृत्तिं सूचयति। तस्मादेते प्रकाराः यदि कथञ्चित् साध्यास्तत्रासिद्धं गाथेति (VIII.1) द्रष्टव्यः॥

## ॥ ४ ॥ विश्लोकः पञ्चमाष्टमौ ॥ ४५ ॥

'ल' इत्यनुवर्तते। पञ्चम्यष्टमौ च मात्रे लघुरेव स्यातान्। सा च जातिर्विश्लोको नाम। शेषं यथाप्राप्तम्—

जीवति न स भुवि नापि परतो न
च यः [51] सुखयति न स सुखो वा स्यात्।[211]
विद्याधनबललक्ष्म्यादिमतां
स्तवने विजहाति यं विश्लोकम्॥

अत्र द्वितीयः सर्वलघुरेव तृतीयो त्रिधा द्विगो गान्तो गादिश्चेति[212]॥

## ॥ ४ ॥ चित्रा नवमश्च ॥ ४६ ॥

नवमी पञ्चम्यष्टमी च मात्रा लघुरेव स्यात्। सा चित्रा नाम। द्वादश्या मात्राया लघुत्वेऽपि चित्रैव स्यात् न वानवासिका, लक्षणगौरवात्—

इन्दुमणिरिव भवतु तपसि रुचिः
रुचिमपि यश इव बिभ्रतु विशदाम्।
अथ च स्फुट [redacted] शशिनि कलङ्किनि
चित्रा रुचिरपि विरपत्रायैः॥

अस्या द्वितीयः सर्वलघुरेव तृतीयो द्विधा गन्तः सर्वलघुश्चेति॥

## ॥ ४ ॥ परयुक्तेनोपचित्रा ॥ ४७ ॥

नवमेन,परयुक्तेन नवमीदशमीभ्यामेकेन,गुरुणा कार्ये उपचित्रा—

अमर्षं मुखं कुर्वन्ति खलाः
सन्तमसन्तं युक्तमयुक्तम्।
दिव्या यशसा धर्मरतानाम्-
मुपचित्रा इव मिलितवर्णाः[213]॥

अस्या द्वितीयस्त्रिधा—द्विगो गन्तो गादिश्च। तृतीयो द्विधा—द्विगो गादिश्चेति॥

(211) A : न स्यात् सुखयति न स्वसुखभाक्। (212) A & M द्विधा द्विगो गादिश्च। (213) A : भित्तिवर्णा ; M : भित्तिवर्णा।

॥ ४ ॥ एभिः पादाकुलकम् ॥ ४८ ॥

एभिर्नवानामन्यतमानां पादैर्मिलितैः पादाकुलकं नाम जातिः—

अनिशं मीलितकुमुदशादिकः[214]
सुकृती दोषोऽभ्युदिततमो घ्नन्।
लोकं भुवि निजपादाकुलकं
नमयति रविरिव यशसोद्गच्छन् ॥

मात्रासमवानवासिकाविश्लोकचित्रापादैरिदम्।

गुरुभिर्लघुभिश्चोदितस्थान्
साहस्रोर्मिः कविवाग्भिश्च।
सुकृती श्रुतैः कुरुते श्लोकान्
कविरिव पादाकुलकाद्यर्थम्[215] ॥

तत्रोपचित्राया आद्यः पादः। अन्ये [52] मात्रासमकस्य। एवमन्यान्यपि द्रष्टव्यानि। एतानि विंशतिश्च पादाकुलकानि ॥

॥ ४ ॥ गीत्यार्या लः ॥ ४९ ॥

यदा एव षोडशमात्रा लघव एव स्युः। न गुरुभिः क्रियेरन्। गीत्यार्या नाम स्यात्।

श्रुत इह सति भुवि पितृगुणगणभृति
मृतमपि जनमभिदधति न मृत इति।
यशसि च शमदमलघुनिततमिति च
तदचलधृतिरिह तप उपचिनु पुरु ॥

ननु एषैव किमिति मात्राभिर्लक्ष्यते। नियताक्षरसंख्यत्वादक्षरैरपि लक्षयितुं शक्यते। वृत्तप्रकरणे पठितव्येति। सत्यम्। 'शिखा विपर्यस्तार्धा' (IV.50) इत्यत्र षोडशमात्रास्थाने अष्टानामेव ग्रहणं यथा स्यादिति। अन्यथा षोडशाक्षरस्थाने षोडशैव गुरवः स्युः ॥

॥ ४ ॥ शिखा विपर्यस्तार्धा ॥ ५० ॥

गीत्यार्याया एवार्धं विपर्यस्येत। गुरुभिः करणं लघुभिर्विहितायाः। सा शिखा नाम। पुनर्विशेषमाह—

॥ ४ ॥ लः पूर्वश्चेज्ज्योतिः ॥ ५१ ॥

विपर्यासश्च।[216] पूर्वो भागः पूर्वमर्धं लघवः उत्तरमर्धं गुरवश्च। सा ज्योतिर्नाम शिखा—

तृणमिव दहदखिलमुरुशिखमिह
दिशि दिशि ततयश उपचिनमपि पुरु।[217]
दीपज्योतिर्हस्ते कुर्वा-
न्नेनु[218] लोकान् रञ्जनेऽपि ॥

(214) A: दर्शनकः; M: दशनकः। (215) A: पादाकुलकाभिह। (216) A: विपर्यासे च पूर्वो।
(217) A: उपचिनु तत पुरु।

॥ ४ ॥ गश्चेत् सौम्या ॥ ५२ ॥

[53] पूर्वो भागो गुरवः अपरो भागो लघवश्चेत् सौम्या नाम स्यात्—

कोकिलैश्चैषा सेव्यैश्चारे
भाति क्रूरा सौम्ये सौम्या ।
सुखयति हृदि विरहिजनमनसि
परमतिहृदि सदृशमपि दहति च ॥[219]

यद्यपि आर्यादिषु[220] सर्वत्र पादान्त एव यतिस्तथापि मात्रासमकादिषु मात्रान्तरेष्वपि विरतार्थमपि कासुचिद्भवति[221]। तदिदं द्विरुक्तेन इति सूचितम्। अन्यथा चोक्तेति ब्रूयात्। इति मात्रासमकादिजातिः॥

॥ ४ ॥ चूलिकार्धमेकोनत्रिंशदन्ते ग् ॥ ५३ ॥

अर्धमेकोनत्रिंशन्मात्राः स्युः चूलिका नाम स्यात्। अन्ते द्वयोर्मात्रयोः स्थाने एको गुरुः स्यात्। अन्ते गुरुत्वस्य नित्यप्राप्तस्य पुनर्वचनं परिसंख्यार्थम्। अन्य एकैकस्मिन् गुरुत्वमन्यत्र लघुत्वमेवेत्यवधारणम्। अर्धस्य विधानात् नात्र पादव्यवस्था। तत एवैतास्वर्धेष्वपि यतिः क्वापि न दर्शिता। अपरवक्त्रेषु हि वृत्तेषु पादव्यवस्था नियता। अनुक्तविशेषाणामार्यादिकृतित्वादुपगीतिमार्यागीतिर्वैन कार्येति।[222] केचिदेतामनिरविरेति—

फलमपि सुकृतिजनमभिहितकुसुममि-
ह वहति भुवि पुष्पपरः ।
पुनरपि फलदं भगवति मधुमपि
घटयति सुमतिमनिरचिरात् ॥

चित्रजातिर्नामैषा। अस्यामेव द्विपदीप्रकाराः[223]।

॥ ४ ॥ सा ग्येन न समा लां ग्ल इति ॥ ५४ ॥

अथ यदि कश्चित्पृच्छेदार्यां वैतालीयादिकं चोदाहृत्य— अस्मिन् श्लोके कति गुरवः कति लघव इति—तत्र स्थितान् वर्णांस्तेनैव संख्यापयेत्। ते यावन्तः संख्यया आर्यादीनां विहिताभ्यो मात्राभ्यो हीयन्ते, तावन्तो गुरवः शिष्टा लघवः। तद्यथा—वन्दे मातरमार्याम् इत्यत्र चतुर्दश-[54]-वर्णाः सन्ति। अस्याश्चार्याया विहिताः सप्तपञ्चाशन्मात्राः। ताभ्य एते शोधितास्त्रयोविंशत्या हीनाः। त्रयोविंशतिरपि गुरवोऽत्र शिष्टा एकादश लघवः। तदाह—सा ग् गुर्वी संख्या गुरूणां संख्येति यावत्। कासौ? येन येन प्रमाणेन न समाः। के? ग्लः गुरवो लघवश्च। श्लोके स्थिता वर्णाः। केषां न समाः? लां मात्राणामार्यादीनां विहितानामित्यभिप्रायः। शोध्यन्ते चैतेन गुरुलघुज्ञानेनार्यादयः॥

इति भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिभाष्ये चतुर्थोऽध्यायः॥

(218) A & S रेतुं। (219) The second half of the verse is corrupt in A, M, T & S Hence the emendation (220) M & S : दिष्वादिषु (221) A : विरमात्र्यधिकं शोभानाहदिः। (222) A drops the sentence. (223) M drops the two sentences.

## [55] अथ पञ्चमोऽध्यायः

॥ ५ ॥ वृत्तम् ॥ १ ॥

अथ वृत्तच्छन्दांस्यधिक्रियन्ते ।[1]

यानित कार्यमनुशिष्यामः श्लोकांस्ते वृत्तानीति वेदितव्याः । वृत्तशब्दोऽयं वर्णनियमेन लक्ष्येषु श्लोकेषु प्रसिद्धः ।[2] वर्णनियमश्च द्विधा—संख्या, गुरुलघुविन्यासश्चेति । पूर्वे श्लोकाः मात्रानियमेन लक्षितत्वान्मात्राच्छन्दांसि । लक्षणञ्च बहूनां गुरुलघुविन्यासप्रकाराणां सामान्येन ऽवृत्तमिति जातिच्छन्दांसीत्युच्यन्ते ।[3] [4]यद्यपि वर्णविन्यासनियमः —यथा गीत्यार्याचूलिकार्यादीनाञ्च प्रस्तारे क्रियमाणे एकैको विशेषस्तत्र वृत्तशब्दो मुख्योऽन्यत्र गौण एव । परे पुनः श्लोकाः वर्णविन्यासनियमेन लक्षितत्वाद् वृत्तानि । इतरेष्वपि यत्र लक्षणं सामान्येन प्रवृत्तं, यथा पदचतुरूर्ध्वं गायत्र्यादयश्च, तथापि जातिशब्दो युक्त एव । यस्माद[5]त्र वर्णसंख्या नियता, तत इह 'लः समुद्रा गणः' इति नाधीयते ॥

॥ ५ ॥ सममर्धसमं विषमञ्च ॥ २ ॥

तत्र वृत्तं सममर्धसमं विषमञ्चेति त्रिधा भवति । यत्र श्लोके चत्वारोऽपि पादा वर्णसंख्यया गुरुलघुविन्यासेन च समानाः तत् समं वृत्तम् । यत्रार्धमर्धेन समं प्रथमतृतीयौ पादौ परस्परसमौ द्वितीयचतुर्थौ परस्परसमौ तदर्धसमम् । आभ्यां विपरीतं विषमम् । द्विधा च विषमार्धसमे भवतः, महाविषमं वितानविषमं, महार्धसमं वितानार्धसमञ्चेति । तत्र पादानामक्षरसंख्यया न्यूनाधिकभावान्महाविषममहार्धसमे भवतः । समाक्षरसंख्यानां तु पादानां [56] गुरुलघुमात्रवैषम्येण[6] विन्यासः —वितानविषमवितानार्धसमे ।

तत्र वितानाभिप्रायेणाह—

॥ ५ ॥ समं तावत्कृत्वः कृतमर्धसमम् ॥ ३ ॥

समवृत्तानां संख्यां तावत्कृत्वः कुर्यात् । समवृत्तसंख्ययैव गुणयेत् साऽर्धसमवृत्तानां संख्या ।

तद्यथा—एकाक्षरस्य छन्दसः द्वे समवृत्ते इति स्थितमष्टमेऽध्याये । द्वयोस्तावत् कृत्वःकरणात् चत्वारि भवन्ति ॥

॥ ५ ॥ विषमञ्च ॥ ४ ॥

पुनस्तान्यपि तावत्कृत्वः कुर्यात् । तावन्ति विषमवृत्तानि । चत्वार्यपि तावत्कृत्वः कृतानि चतुर्गुणितानि षोडश भवन्ति ॥

(1) M omits this *sūtra* and the following sentence of the Commentary. (2) A : प्रवृत्त । (3) A & M : चोच्यन्ते । (4) A & M : तथापि । (5) M : तस्मात् । (6) M : वैषम्यमात्रेण ।

॥ ५ ॥ राश्यूनः ॥ ५ ॥

तावत्कृत्वः कृतस्य सर्वं राशिना 'एकेन' हीनमेव संख्या भवति, न सर्वम्। तेन द्वयोर्द्विरभ्यस्तयोः यानि चत्वारि तेभ्योऽधिकं राशिमपनयेत्। द्वे अवशिष्येते। तेनैकाक्षरस्य छन्दसो द्वे अर्धसमे। तथा चतुर्णां चतुष्करणाद् यानि षोडश तेभ्यश्चतुष्कं राशिमपनयेत्। द्वादशावशिष्यन्ते। तेनैकाक्षरस्य विषमाणि द्वादश। एवमन्येष्वपि छन्दःसु समवृत्तानि। समवृत्तानि तावत्कृत्वः कृत्वैकं राशिमपनयेत्। तावन्त्यर्धसमानि। अर्धसमवृत्तान्येव तावत्कृत्वः कृत्वैकं राशिमपनयेत्। तावन्ति विषमाणि। यदा पुनः समानि तावत्कृत्वः कृत्वा राशिना नापनीयन्ते तदा समार्धसमानां सर्वेषां मिलितानां संख्या। अत्रैव पूर्वस्मिन् राशौ त्यागे उत्तरस्य चात्यागे विषमार्धसमानां संख्या।[9] यथा पादाकुलकानाम्॥

[57] ॥ ५ ॥ ग्लिति समानी ॥ ६ ॥

इदानीं समवृत्तान्युच्यन्ते। सर्वेषु छन्दःसु युग्माक्षरेषु चतुरक्षरषडक्षरप्रभृतिषु गुरुर्लघुः पुनर्गुरुः पुनर्लघुरित्यादि छन्दसोऽक्षरसंख्यायाः समाप्तेरावृत्तौ समानी नाम वृत्तं भवति। सा लघू गौ चतसीति केचित्। इतिशब्दः प्रकारावृत्त्यर्थः। 'पादश्चतुर्भाग' इति न विस्मर्तव्यम्। तत्र गायत्री समानी—धर्म-सम्पदोऽत्र सन्ति किं समा न। धर्मकाममोक्षसिद्धयोऽर्थदा हि॥ अत्र समानीति सामान्यायां सत्यामपि संज्ञायां क्वचिद्विशेषसंज्ञाऽप्यस्ति। तद्यथा—उष्णिहि समानी विभूतिः। जगत्यां विभावरी वसन्तचामरी चामरी च। अतिजगत्यां हयप्लुता, अतिशक्वर्यां शुभमित्येका। अभिकृतौ दीपमालिकेति॥

॥ ५ ॥ ल्गिति प्रमाणी ॥ ७ ॥

लघुर्गुरुः पुनर्लघुः पुनर्गुरुरिति लघूपक्रमा चेदावृत्तिः प्रमाणी नाम वृत्तं भवति। अत्र गायत्री प्रमाणी—गुणाकरा च या कुलप्रमाणवत्सौ। क्रियेव साध्यते गुणा हि साधवः॥ अत्रापि क्वचित् संज्ञान्तरम्। गमस्तिमालिकेति॥

॥ ५ ॥ वितानमन्यत् ॥ ८ ॥

आभ्यां समानीप्रमाणीभ्यामन्यत् सर्वं वृत्तजातं वितानसंज्ञं वेदितव्यम्। अन्यत्र महाविषमसमार्धसमेभ्यो वितानमिति सामान्यायां सत्यामपि संज्ञायां, केषाञ्चिद्विशेषसंज्ञाऽप्यस्ति। तथा सर्वेषूक्तेषु छन्दःसु सम-वृत्तानि वितानोदाहरणान्युच्यन्ते। अत्रोक्ते श्रीनामाद्यं वृत्तम्—या श्रीः। सा स्तात्॥ अत्यायुक्ते स्त्री नामाद्यं वृत्तं पञ्चं वा—स्त्रीणां मुख्या। पद्मा पायात्॥ द्वितीयं मुखं—सदा रमा। श्रियात् सुखम्॥ अथ मध्ये आद्यानि चत्वारि वृत्तानि कमा-[58]-न्नारी मदोद्धमृगी मदरथ—का नारी लोकेऽस्ति। श्रोतुल्या रूपाद्यैः॥ रमायाः प्रसादे। न किं स्यात्प्रदोषम्॥ श्रीमुग्धी चञ्चला। बध्यते सद्गुणैः॥ कमलास्तवनात्। किमिहाप्यवरम्॥ जननीति केचित्।

अथ प्रतिष्ठायामाद्यानि सप्तवृत्तानि। कन्या क्रीडा समृद्धिः सुमतिः श्रीमल्लिका नया सुमुखी च—नीतिं हित्वा[10] प्राप्ता लक्ष्मीः। कान्ते भोग्या कन्येवान्यैः॥ अपि क्रीडां कुरुतेऽपि। विना नित्या कृता

(7) M : संख्यायाम्। (8) M · अन्य। (9) M omits this sentence. (10) S. भित्वा।

वल्लरीः॥ श्रीसमृद्धिः केरलाद्यौ। केरलब्धा[11] नीतिमार्गाः॥ सततं श्रीरचला स्यात्। सुमतिश्चेत्सुरापे॥ श्रीमल्लिकामालां गले। भद्रां गुणैः कुर्यात् सदा॥ नयाच्छ्रियो जया मताः। नयात् क्रिया फलोचिताः॥ प्रभायषेषा प्रसन्नादुक्ता[12]। किं बहुना यस्य नयाः। तस्य सदा श्रीः सुमुखी॥

अथ सुप्रतिष्ठायां त्रयोदश वृत्तम्। उदाहरणानि—वारेण भृगोः नन्दा सह चेत्। सर्वेष्वपि सा कार्येषु शुभा॥ तृतीयं प्रीतिः—सौम्यवारेण स्याद्यदा भद्रा। सर्वकार्येषु प्रीतिरेव स्यात्॥ चतुर्थं धनपंक्तिः—जयया सार्धं कुजवारश्चेत्। अतिसौख्यानां धनपङ्क्तिः सा॥ षष्ठं—सदा तु रिक्ता दिनेशसूनौ। निहन्ति दोषाननुक्रमेण॥ सप्तमम्—या खलु पूर्णा स्याद् गुरुवारे। सा फलपङ्क्तिं कर्मसु सूते। दशमम्—अभिजिति यश्चरति शुभम्। शुभनियतिस्तदभिमुखी॥ एकादशम्—एवमादिके मर्त्यक्रिया। यातना श्रियो वायुरेव सा॥

एवमुक्तादिषु समवृत्तानि। तान्येवैकैकोदाहरणानि च विशेषाभिः[13] संज्ञाभिः सहोक्तानि। गायत्र्यादिषु वक्ष्यन्ते विषमार्धसमानि च। अत्राद्यद्वितीयतृतीयचतुर्थपञ्चमादि प्रस्तारापेक्षया नष्टप्रत्ययेन बोद्धव्यम्। अथेदानीं वितानसंज्ञानामेव केषाञ्चिदनु-[ 59 ]-ष्टुभानां समविषमार्धसमाना साधारणैर्लक्षणैः साधारण्यः संज्ञाः प्रक्रियन्ते। तानि च सङ्कीर्णान्युच्यन्ते॥

## ॥ ५ ॥ पादस्यानुष्टुब्वक्त्रम् ॥ ९ ॥

पादस्येति चानुष्टुबिति च वक्त्रमिति चाधिकारः। तेन वक्ष्यमाणलक्षणं पादस्य।[14] छन्दश्चानुष्टुप् वक्त्रं वक्त्रसंज्ञकं वेदितव्यम्॥

## ॥ ५ ॥ न प्रथमात् स्नौ ॥ १० ॥

अस्मिन्ननुष्टुब्बधिकारे सर्वस्य पादस्य प्रथमाक्षरादूर्ध्वं स्नौ गणौ न कर्तव्यौ॥

## ॥ ५ ॥ वाऽन्यत् ॥ ११ ॥

स्नाभ्यामन्यन्मयरतजभादि[15] पञ्चकं प्रथमाक्षरादूर्ध्वं विकल्पेन भवतीति। किमर्थमिदम्? सिद्ध एव विकल्पः। अन्यस्याप्रतिषेधात् युगपत् प्रयोगस्यासम्भवाच्च। अत तर्हि व्यवस्थयाऽयं विकल्पः स्यात्? तथाहि यस्य पादस्य चतुर्थादक्षरादूर्ध्वं[16] यगणः कृतः तस्य प्रथमाक्षरादूर्ध्वं षडपि गणा भवन्ति। यस्य चतुर्थान्मगणस्तगणो वा तस्य प्रथमाद्रगण एव नान्यः। यस्य जगण[17]स्तस्य प्रथमाद्रगणो नित्यं न भवति। यस्य परिशिष्टा[18]श्चत्वारः रसमनाः प्रथमात्त एव गणाः प्रयोक्तव्याः। यैश्चतुर्थमक्षरं गुरु स्यात् तैः षगणस्य निषिद्धत्वात् मयरा एव। अत्र श्लोकः—

मगणे तगणे न स्याज्जगणे सर्वदा न रः।
यगणे षडपि ज्ञेयाः शिष्टेषु मयरास्त्रयः॥

प्राक् पदचतुरूर्ध्वादयं न्यायः सर्वत्रोन्नेयः॥

(11) M केरलाद्य। (12) A omits प्रसन्नादुक्ता। (13) A विशेषाभिसंज्ञाभि (14) A पादस्य। (15) A adds षन। (16) A जय। (17) A जय। (18) M उपदिष्टा।

॥ ५ ॥ विपरीतैकीयम् ॥ १४ ॥

विपरीतैव पथ्यैकेषामैकीयं मतम्। तेन पूर्वोक्तमयुक्पादलक्षणं युजोरयुजोर्युक्पादलक्षणं, संज्ञाऽपि विपरीतेति।

अर्धसमं यथा—अङ्गं श्लक्ष्णममांसलं चिपिटं वा शिरालं वा। यच्चाङ्गुष्ठमतस्तनुर्विपरीतोत्तरा पथ्या॥

अथ विषमं—त्वक्स्नेहे शयनं सुखं सौभाग्यं नयनस्नेहे। अङ्गस्नेहे सुभोजनं स्वरे सौख्यं शिरःस्नेहे॥

॥ ५ ॥ चपलाऽयुजो न् ॥ १५ ॥

अयुग्मयोः पादयोश्चतुर्थान्नगणं स्यात्। चपला नाम वृत्तम्।

अर्धसमं यथा—शङ्ख[27]तपत्रशिबिकाहयहस्तिसमा रेखाः। हस्त्याः श्रियं दृढतरं चपलामपि कुर्वन्ति॥

अथ विषमं—मणिबन्धादुदयते यन्मध्यमा[28]ङ्गुलिरेखा। न तं जहाति पुरुषं स्त्रियं वा चपलाऽपि श्रीः॥

अत्र युजो युगपल्लघ्वन्ता न कार्याः। तयास्ते 'सर्वतः सैतवस्य' (V.17) इति संज्ञान्तरस्य वक्ष्यमाणत्वात्॥

[ 62 ] ॥ ५ ॥ विपुला युग् लसप्तमः ॥ १६ ॥

युक्पादो लघुसप्तमश्चेत् विपुला नाम स्यात्। अयुक् तु वक्त्रस्यैव[29]।

अर्धसमं यथा—अस्वेदकौ मृदू सोष्माबूर्ध्वरेखाङ्किततलौ[30]। पादौ नरस्य नार्या वा लक्ष्मीं विधत्तो विपुलाम्॥

अथ विषमं यथा—हस्तयोः पद्माश्च शस्त्राभाः रेखाः कुर्वन्ति धनिनम्। नारीं नरं तु सेनान्यं मीनपुच्छनिभाः यतिम्॥

॥ ५ ॥ सर्वतः सैतवस्य ॥ १७ ॥

सर्वेषु पादेषु सप्तमाक्षरं लघु भवति विपुलायाः सैतवस्याचार्यस्य मतेन। तत्र समं यथा—सैतवस्य पदस्थली स्त्री च पूजितलक्षणा। गन्तृ[31]वर्गमिमं सदा रक्षतो विपुलापदं॥

अर्धसमं—यल्लक्षणं पुंसि शुभं प्रायशो योषितां च तत्। यत्राकृतिस्तत्र गुणाः सन्ति दोषा दुराकृतौ॥

अथ विषमं—शस्तं गात्रमरोमशं नाशु न स्थूलसक्थकम्। पीनौ वृत्तौ[32]स्तनौ घनावूरू च सनितम्बकौ॥

लसप्तम इत्युक्तत्वात् सर्वेऽपि लघ्वन्ताः सर्वेष्वपि तत्र[33] चतुर्थाद्भवन्ति॥

॥ ५ ॥ भ्रौ न्तौ च ॥ १८ ॥

चतुर्थादित्येव। चकारात् 'सर्वत' इत्यनुकृष्यते। चतुर्थाद्भरनताश्च गणाः सर्वेषु पादेषु भवन्ति विपुलायाः। यथागणञ्च संज्ञा—भश्चेद्भविपुला, रश्चेद्रविपुला, नश्चेन्नविपुला, तश्चेत्तविपुला।[34]

(27) A : संख्या। (28) A : मध्यमा। (29) A omits अयुक् तु वक्त्रस्यैव, and reads ' युक्पथ्यायामेव ' in its place. (30) A : कृतलौ ; M : करतलौ ; S : विततौ। (31) A : गन्तु ; M : गन्त्र। (32) M omits वृत्तौ। (33) M adds here ' भविपुला '। (34) M omits the last two names.

॥ ५ ॥ प्रतिपादञ्चतुर्वृद्धया पदचतुरूर्ध्वम् ॥ १९ ॥

अनुष्टुबित्यनुवर्तते। प्रतिपादं चतुर्भिरक्षरैर्वृद्धया पदचतुरूर्ध्वं नाम। आद्यः पादोऽष्टाक्षर[42]श्चतुर्वृद्धया द्वितीयो द्वादशाक्षरस्तृतीयः षोडशाक्षरश्चतुर्थो विंशत्यक्षरः। अत्र विशेषवचनाभावाद् ग्लावित्यधिकारेण गुरुलघुवर्णा विपतिष्ठेते[43]। तयोश्च यथाकाम[44] विन्यासः।

केचित्तु आर्यायामिव गणव्यविन्यासमाहुः। अनुक्तविशेषाणामार्याप्रकृतिरनुक्तमस्थानां समाहारता[45], अनुक्तयतीनां पादान्ते यतिर्मध्ये च यथाशोभमिति हि छन्दसो न्याय —

फरपदतलं पीनं
मध्या नता भ्रूर्वलिपु विषमा वा।
छिन्ना[46] ललाटरेखा छिन्नाग्रा नासिका यदि वा
यस्यास्तो पदचतुरूर्ध्वमपि न हित्वा[47] व्रजत्यगम्यां स्त्रीम् ॥

अत्र पादानां व्यत्यासोऽप्युच्यते। तेनेदं चतुर्विंशतिधा भवति। न्यासः—

अद्वपवि, अद्वविप, अपद्वि, अपविद्व, अविद्वप, अविपद्व एवं षट्। द्वअपवि, द्वअविप, द्वपअवि, द्वपविअ, द्वविअप द्वविपअ एवं षट्। पअद्वि, पअविद्व, पद्वअवि पद्वविअ पविअद्व पविद्वअ, एवं षट्। विअद्वप, विअपद्व, विद्वअप विद्वपअ विपअद्व, विपद्वअ एव षट्। एव चतुर्विंशतिधा भेदोऽस्य ॥[48]

॥ ५ ॥ गावन्त आपीडः ॥ २० ॥

एषामेव पादानामन्ते गुरू द्वौ चेदापीडो नाम [65] वृत्तं पदचतुरूर्ध्वं भवति। गावन्त इति वचनमन्येषां लघुत्वार्थं गावन्त एवेत्येतत् पदं व्याख्येयम्—

जयति परिमृश्यमानकुलयुवतिरपि वतसे। यदि हनुतलभुवि चुबुकभुवि विमलं[49] प्रभवति वसनजमय[50] यदि करतलमपि पीतम् ॥

इदमपि चतुर्विंशतिधा ॥

॥ ५ ॥ गावादौ चेत् प्रत्यापीडः ॥ २१ ॥

आदौ चेत् पादानां गुरू द्वौ प्रत्यापीडः —

अनुष्ठमतिचरति तर्जन्यपि-[हित]51–मिव यदि वत[52]। ताः स्वस्तिन इव पतितजलमभिरमयितुमापीडमुपनिदधति[53] युवतय उपपतिशिरसि ॥

इदमपि चतुर्विंशतिधा ॥

(42) A adds तस्य। (43) M : गुरुलघुवर्णा उपतिष्ठन्ते। (44) M : यथाक्रमं। (45) A : सहस्राक्षरा। (46) A adds ललाट before this ; M : भिन्ना। (47) M : वाचा ; S : भित्वा। (48) A & S both omit these permutations We have rearranged the order found in M and T according to mathematical convention. (49) A : निमर्नं ; S : विमार्नं। (50) A : वासनज° ; (51) A : lacuna [ ] (52) A : पदि ; M : यति। (53) A : आपीडमुपनिदधाति।

॥ ५ ॥ प्रत्यापीडो गावादौ च ॥ २२ ॥

गावादावन्ते च यदा तदाऽपि प्रत्यापीड एव—यासौ न भुजगनाभा[54]पथा स्खलति न च पदकनिष्ठा। सारथ्यानवरतमु[55]पपतिजनमनु[56]प्रत्यापीडं वरगुपनिदधति[57] युवतय उपकचबन्धा ॥ इदमपि तथा ॥

अथ पदचतुरूर्ध्वपादव्यत्यासजानामेव वृत्तानां वृत्तत्रयस्य संज्ञान्तरम्—

॥ ५ ॥ प्रथमविपर्यासे मञ्जरीलवल्यमृतधाराः ॥ २३ ॥

प्रथमस्य पादस्य विपर्यासे अन्यैः पादैः मञ्जरी लवल्यमृतधारा च पदचतुरूर्ध्वं भवति। द्वितीयेन व्यत्यासे मञ्जरी। तृतीयेन व्यत्यासे लवली। चतुर्थेन व्यत्यासेऽमृतधारा—

यदि पतिरतिशङ्कम[58]तिरिह रामा रम्यविदग्धा च। वल्लभकुलाद्[59] सा स्त्री सम्प्राप्यते परं स्वकमाच्छाद्[60]नैवृताऽप्यनेकैर्कदलिका[61] मञ्जरीव कोशदलात् ॥

अपापीडे—प्रकटयति रदनति[62]मनुहसनदेतावपि फलततिमिह[63] लवली या।[64] भवति जगति सा स्त्री पथि परिमितजल[65]सरिदिव बहुविट[66]जनलङ्घ्या ॥

भुजगजन[67]दशनमतिक्रामति हलमिव दीर्घं
यदि भवति कलहनिरता स्त्री।
पतिमतिचरति च वचनममृतधारा-
समपि न शृणोति ॥

इति पदचतुरूर्ध्व -[66]- प्रकरणम् ॥

॥ ५ ॥ षदगलामेकतः स्जौ स्लौ न्सौ ज्गौ भ्नौ ज्लौ ग् स्जौ स्जौ ग् ॥ २४ ॥

सजसा लघुरच नसजा गुरुश्चैकतः। एकतोऽर्धमिदमथ भनजा लघुर्गुरुश्च सभौ द्विकौ गुरुश्चार्धमित्यमर्धतो विभज्योद्गता पठतोत्यन्वयः। अर्धशो विभागादनुभयोः पादयोरविशम्ब्येकस्तेनैव द्रुतं पठितव्यम्। तत्र स्जौ स्लाविस्याद्यः पादः। न्सौ ज्गाविति द्वितीयः। भ्नौ ज्लौ गिति तृतीयः पादः। स्जौ स्जौ गिति चतुर्थः पादः। लघोर्गुरोरेव सूत्रे पृथक्करणात् पादसमाप्तिः। अन्यत्राप्येवं सूत्रमध्ये लघुगुरुदर्शने पादसमाप्तिर्ज्ञेया।

नन्वेकस्वेन[68]वेद् पाठः किं पादव्यवस्थया? उच्यते—एकेन शब्देन मा पादो[69] सन्धिमितामिति। एतेनान्यत्र पादान्ते विश्रम्य पाठ उक्तः—

धनिनां भवन्ति सुकृतानि धनविरहिता [67] सदाऽस्थिरा।
मुक्तिरपि धनिषु किं बहुना सकलं धनेन[70] किमु कीर्तिरुद्गता ॥

(54) A : न भवभनाभा। (55) A : आवरत। (56) A : °मनुम। (57) A : प्रत्यापीड वगुपनिदधा°। (58) A : जन। (59) A : वनितकुलात्। (60) A स्वच्छन्दं°; S : °च्छादने। (61) A : कदलिना। (62) A : रदनिमनु°। (63) A : °मिव ; S °मिह च। (64) A : लवलीनया। (65) A : जलज°। (66) A : विरव°। (67) A : भुजगमनभ°। (68) A : ननु च एकस्वेन। (69) A · मारो instead of मा पादो। (70) A : सकलजयेन ; S : सकलधनेन।

॥ ५ ॥ तृतीयस्य सौरभकं र्नौ भ्गौ ॥ २५ ॥

उद्गताया एव तृतीयस्य पादस्य स्थाने रनभगाः स्युः सौरभकं नाम वृत्तम्—पवनाः किरन्ति कुसुमानि समयविकचानि शाखिनाम् । तन्वते च दिवि सौरभकं धनिनां यशांसि[71] विविधाऽर्हणास्तथा[72] ॥

॥ ५ ॥ ललितं नौ सौ ॥ २६ ॥

तृतीयस्यैव पादस्य स्थाने नौ सौ च स्युर्ललितं नाम वृत्तम्—ललितध्वनिः पिकरुतेन नवमधुरसैर्नगो मधु । सुरभिरपि[73] सुरभिभिः कुसुमैरलिभि[74]स्तथैव विपिनोपजीवति ॥[75]

॥ ५ ॥ उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ स्नौ ज्नौ ग् नौ स् नौ न्जौ य् ॥ २७ ॥

मसजभा गुरू च द्वौ प्रथमः पादः । सनजरा गुरुश्च द्वितीयः । नौ द्वौ सश्च तृतीयः । स इति सूत्रे पृथक्करणात् पादसमाप्तिः[76] । नाजायो जयौ च चतुर्थः । तदेतदुपस्थितप्रचुपितं नाम वृत्तम् । प्रथमाद्यं पादं पृथक् पठन्त्यन्यत् पादत्रयं सदैव—

कामो यातु धनं व्ययेतु तिष्ठतु कीर्तिः
धनिनां धनमपि ते समेति भूयः ।
अथनि हि पुनरपि तत्
प्रचुपितपद्मुदकमुपस्थितपूर्वम् ॥

॥ ५ ॥ वर्धमानं तृतीये नौ स्नौ न्सौ ॥ २८ ॥

अस्यैव तृतीये पादे नौ द्वौ सरच पुनर्नौ द्वौ सरच[77] वर्धमानं नाम वृत्तम् । अन्यत् पूर्ववत्—

उद्गतं प्रथमं यशोङ्कुरं[78] धनवीजात्
वितनोति धनफलानि वर्धमानम् ।
धनमपि घटयति ढौकितमवधु वसुधनं[79]
[68] गृहशकुनिरिव शकुनिमंधमगृह्यम् ॥

॥ ५ ॥ शुद्धविराड्वृषभं त्जौ ॥ २९ ॥

तृतीय एव पादे तजराः स्युः शुद्धविराड्वृषभं नाम वृत्तम्—
इष्ट्वा त्यक्तधनैर्मखैर्हरिं भगवन्तं
तपसा वृषभम[80]वाप्य वृत्तमग्र्यम्[81] ।

(71) A : धनानि । (72) A : विश्वजना जनास्तथा; M & S त्रिविधान्नाहार्यस्तथा । (73) M : द्विजुभिरपि । (74) A : धनिभिः । (75) A विपिनोऽपि जीवति । (76) A omits this sentence. (77) A adds स्युः । (78) M उद्धृत क्रियया पुराङ्कुर ; S : क्रियादनाङ्कुर । (79) M : लभ्यति बहुधननिचय । (80) M वृषम । (81) M & S अग्र्यम् ।

तच्छुभविराट्पदात् परं[82]
भजति पदमजममृतमुज्झितशत्रुः[83] ॥

इति महाविषमप्रकरणम्[84]। अथार्धसमान्यारभ्यन्ते—

॥ ५ ॥ अर्धे ॥ ३० ॥

अधिकारोऽयमाऽध्यायपरिसमाप्तेः। अर्धे लक्षणमधिकृतं वेदितव्यम्। तत्र विधानादर्धसमम्[85] तावत्॥

॥ ५ ॥ उपचित्रकं सौ स्लौ ग् भौ भ्गौ ग् ॥ ३१ ॥

सात्रयो लघुगुरू चाद्यः पादः भात्रयो गुरू च द्वावन्त्यः।[86] तदेतदाद्यमर्धम्।[87] द्वितीयमप्यर्धमीदृशमेव।[88] तदेतदुपचित्रकं नाम वृत्तम्—

चतुरन्तमहीपतिना यतिः[89]
नीतमना[90] मृगयाव्यसनाय।
उपचित्रकमेत्य गिरेर्वनं[91]
चिन्तयति स्म नृपः किल कश्चित्॥[92]

एतौ त्रैष्टुभयोर्द्वयोः समवृत्तयोः पादौ महतावेकमर्धसमवृत्तम्। अयं न्यायोऽन्यत्रापि स्यात्। तेनान्येऽपि त्रैष्टुभानां चाऽन्यवृत्तानां समाक्षरसंख्याः पादाः द्वौ द्वावेकभूयं भूत्वा बहून्यर्धसमानि सम्पद्यन्ते। तेषां सर्वं तावद्गृह्य कृत्स्नमर्धसममिति सङ्क्षेपोक्तः। अथार्धसमानि[93]—

॥ ५ ॥ द्रुतमध्या भौ भ्गौ ग् न्जौ ज्यौ ॥ ३२ ॥

भात्रयो गौ चाद्यः पादः नो जौ द्वौ यश्चान्त्यः द्रुतमध्या—

माल्लगतस्य विपक्षकदम्बं प्रतिपदमन्तक[94]व्रजतो मे।
चित्तमिदं हरति द्रुमराजी[95] [69] विधुरिव पूर्णनदी द्रुतमध्या ॥

नलिनश्च। एषा सञ्ज्ञान्तरार्थं पुनरुपादानम्॥

॥ ५ ॥ वेगवती सौ स्गौ भौ भ्गौ ग् ॥ ३३ ॥

सात्रयो गुरुश्चाद्यः पादः भात्रयो गौ च द्वावन्त्यः वेगवती[96]—

आराध्यति किं नगरश्रीः सर्वमिनामिश्वमध्यदृढाताम्।
नियमं विमिनत्ति[97] वनश्रीर्वेगवतीव नदी मृदुमेतुम् ॥

आपातलिका वा॥

(82) M परं। (83) M · परमजममृतमुि--- · शत्रुः। (84) A omits the sentence ; M reads this after V. 30 (85) A तत्र विनालार्धसमं। (86) A द्वावन्त्य। (87) M · तदेतदर्धसममस्य ; S : तदेतदर्धसमम्। अस्य (88) M · तादृशमेव। (89) M · चतुरन्तमहीपतिनाऽऽ ; S · चतुरन्त- महीपतिनिपात। (90) A · दत्तमनो। (91) A · वनम्। (92) A कश्चित्। (93) A · अथ महाविषमार्ध- समानि ; M · अर्धसममहार्धसमानि। (94) M प्रतिमन्तरूप। (95) A · धूतराजी। (96) M adds नाम। (97) M · नियमाद्विहिनस्ति ; S नियम विहिनस्ति।

॥ ५ ॥ भद्रविराट् त्जौ गौ म्भौ ज्गौ ग् ॥ ३४ ॥

तजरा गुरुश्चाद्यः पादः भसजा गौ च द्वावन्यो भद्रविराट्—

वेश्मानि[98] समानि नो गुहाभिख्यानानि वनैस्पत्यकानाम् ।[99]
कस्तिष्ठति सर्वतोऽरिभग्नो राजा भद्रविराट् कुलाभिजात ॥[100]

औपच्छन्दसिकं वा ॥[101]

॥ ५ ॥ केतुमती स्जौ स्गौ भ्रौ न्गौ ग् ॥ ३५ ॥

सजसा गुरुश्चाद्यो भरना गौ च द्वावन्यः केतुमती—

धनुषां शतैर्मकरकेतोः संग्रथिता शिलीमुखनतानाम् ।
अटवी निरस्यति धृतिर्वा केतुमती चमूरिव भटस्य ॥[102]

॥ ५ ॥ आख्यानकी[103] तौ ज्गौ ग् ज्तौ ज्गौ ग् ॥ ३६ ॥

मध्यत्वात् तौ जो गौ च द्वावाद्यो जतजा गौ च द्वावन्य आख्यानकी । व्यत्यस्तैवेयमाख्यानकी[104]—

एषा मयूरावलिरुच्चकेका तते[105] कलापैर्विदिनस्य लक्ष्मीम् ।
आख्यानकी खादयति[106] भवन्तं निजेषु सर्वोऽपि हि पक्षपाती ॥

॥ ५ ॥ विपरीताख्यानकी ज्तौ ज्गौ ग् तौ ज्गौ ग् ॥ ३७ ॥

जतजा गौ च द्वावाद्यस्तौ जो गौ च द्वावन्यः विपरीताख्यानकी—

यदन्यशोभन्न[107]यदत्यपीषन् कामप्रसङ्गेषु विकासभावा ।
सुवासिताऽपि प्रमदा विजातिराख्यानकी सा[108] विपरीतपूर्वा ॥

अनयोर्वितानसंज्ञयो[109] -[70]- सूचिभकन्यायेन सिद्धयोरपि पुनर्वचनं संज्ञान्तरार्थम् ॥

॥ ५ ॥ हरिणप्लुता सौ स्लौ ग् न्भौ भ्रौ ॥ ३८ ॥

सान्त्ययो लघुर्गुरुश्चाद्यः[110] नो भौ रश्चान्त्यो हरिणप्लुता—

इयमुन्नतिरत्र निवासिनामिह भवान् पुरि वा वसतु स्यन् ।[111]
इति भूमिरसौ वदतीव मां खगरुतेन महाहरिणप्लुता ॥

---

(98) A : वर्मणि ; M : मन्दाणि । (99) M : वनैस्पत्यकाम्याम् । (100) M omits कुलाभिजात । (101) M omits this name ; A reads च in place of वा । (102) A : चमूरिव परस्य ; M : रामभट्टस्य (103) A & M : आख्यानिकी (104) A omits this sentence (105) M : एषां मयूरा-वलीरुच्चकेकान्तरं (106) M : वाचयति (107) M : °वेश्मवदन्यविस्त्यम् (108) M reads : साख्यानकीयं (109) M : °संस्ययो (110) A reads अन्त्य in place of आद्य here, as also in all other similar places. (111) M : पुरि वस्त्ययम्

॥ अपरवक्त्रं नौ लौं ग् न्जौ ज्रौ ॥ ३९ ॥[112]

नौ द्वौ रो लघुर्गुरुश्चाद्यः नो जौ द्वौ रश्चान्योऽपरवक्त्रम्—

सततमकलकामसम्पदं परमचलं जन ते समाश्रिता।
न पुनरपरवक्त्रमीक्षते कुलजवधूरिव राजकामदा॥

वैतालीयं वा॥

॥ ५ ॥ पुष्पिताग्रा नौ यौं ञ्जौ ज्रौ ग् ॥ ४० ॥

नौ द्वौ रयौ चाद्यः पादः। मध्यस्थानीयत्वात् पादसमाप्तिः। नो जौ द्वौ रो गुरुश्चान्यः पुष्पिताग्रा—

कुसुमितशिरसं समाश्रयन्ती धव[113]मतिपल्लवधर्मकं विभाति।
ऋतुसमयगृहीतपुष्पधर्मा वृततिरियं वनितेव पुष्पिताग्रा॥

औपच्छन्दसिकं वा। अत्र[114] पुष्पिताग्रेत्येतावतैव लक्षणं सिध्यति, शेषस्यापरवक्त्रलक्षणाधिकारादेव सिद्धेः। यथा 'औपच्छन्दसिकमि'त्यत्र (IV 34) तथाऽप्यक्षरविन्यासो नाधिक्रियत[115] इति दर्शयितुं तथा न कृतम्। तेन शिखायां पूर्वविन्यासो नाधीयते[116]॥

॥ ५ ॥ यवमतो र्जौ र्जौ ज्रौ ज्रौ ग् ॥ ४१ ॥

रजौ द्विकावाद्यः। मध्यस्थानत्वात् पादसमाप्तिः। जरौ द्विकौ गुरुश्चान्यो[117] यवमती—

श्रीहिनः पुरेषु के नरा[118] यथैव यवान्विताः फलान्विताश्च तद्वत्।
सन्तु वा पुरेषु सम्पदस्तथापि तपस्यया वनेषु सन्त्यमुत्र लोकाः॥

॥ ५ ॥ शिखैकान्नत्रिंशदेक[119] त्रिंशदन्ते ग् ॥ ४२ ॥

एकान्नत्रिंशदक्षराण्याद्यः पाद एकत्रिंशदक्षराण्यन्त्यः शिखा। अन्ते द्वयोर्गुः स्यात्। गुरोरयं नियमो नान्त्यस्य। किमनेन विभागेन? अस्यैव यदि समस्तस्य[120] स्यात् योऽन्त्यस्तत्र गुरेवेति। तदा पूर्वत्र लघुर्वा गुर्वा स्यात्। [71] न नियमः। यदा तु ग्लावित्यधिकाराद्गुरौ च लघौ च प्राप्ते यो गुः सोऽन्त्य एवेति गुरोर्नियमः, तदा[121] पूर्वत्र लघुरेव स्यात्। अन्त्यस्य नियमेऽत्र पादान्त सर्ववत्त्वेऽ[122]प्यर्थान्ते वैयर्थ्यं स्यात्। गन्त इत्येव सिद्धत्वात्। गुरोस्तु नियमः पादद्वयेऽप्यर्थवान्। तस्माद्गुरोरयं नियमः[123]। अनुक्तविशेषाणामार्याप्रकृतित्वात्। गीतेरार्यागीतेश्चार्धेन प्रयोग इति केचित्—

(112) M drops the *bhāṣya* and the following *sūtra* (V. 40) (113) M · धवम् (114) A omits (115) M · नाधीयते। (116) M & S omit these words beginning from इति (117) A omits श्च (118) A & M: केदारा ; S · ये नरा ; T केनरा (119) M : शिखैकोनत्रिंशत् (120) M : तस्य ; A · °स्यमस्य (121) M यदा (122) M · तु (123) A drops the two succeeding sentences and reads, in its stead · गन्ता द्विर्वसवो मात्रासमकमित्यत्र नवमादीनां पुनर्लघुत्वनियमादेतस्यैव नियम आश्रित।

इति किलनरपतिरल्पमभिगम्य[124] इव न भुवि तपसि स मतिमकरोद्
धशमयदपि सुतयुवतिसपरिकरधनचयविनिहितखलमतिमखिलाम्[125] ।
पुनरपि पुनरपि धनरुचिमतिशयमविखलमतिमभिवदति जनं[126]
न तु जनमधिकगुण[127]मुपचितशुभमभिभवति न दहति मदनदवशिखा ॥

॥ ५ ॥   खञ्जा महत्ययुजोरिति[128]   ॥ ४३ ॥

महत्येकत्रिंशत्के पादेऽयुजि प्रथमे तृतीये च कृते, एकान्नत्रिंशत्के च युजि खञ्जा नाम । एवं पूर्वश्लोक एव पादविपर्यासेनोदाहार्यः ॥

इति भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिभाष्ये पञ्चमोऽध्याय. ॥



(124) M drops गज (125) M . °सुपरिकर धननिचय नियत खत् मितिमखिलां (126) M धनरुचिमतिशयमति भवति पुरमसुभसं (127) A : अधिगुन° (128) M reads the *sūtra* in a different version in addition to the conventional one : खञ्जा त्रिनियम्य यदि. and drops the *bhāṣya* on it.

# अथ षष्ठोऽध्यायः

## ॥ ६ ॥ यतिविच्छेदः ॥ १ ॥

वितानमन्यदिति वृत्तानां संज्ञोक्ता। तत्पश्चात् प्रस्तारादि वक्ष्यते। किं पुनरिदानीमारभ्यते? तस्यामपि वितानमिति सामान्यायां[1] संज्ञायां वैशेषिकसंज्ञा यतिश्चेति। केषांचिदुक्तं प्रस्तारादिलक्षितानामपि पुनर्लक्षणमारभ्यते। प्रथमं तावद् यतेर्लक्षणं कथयति। यतिर्विच्छेद इति। विच्छेदः पाठकस्य यतिः। पठतो[2] मध्येऽन्ते वा यो विलम्ब[3] सा यतिः।

अत्र यत्युपनिषदो नाम भवन्ति। तद्यथा—

यतिः पठद्विलम्बोऽसौ त्यागोऽर्धे सन्धिपाठयोः।
पादान्ते पादमध्ये वा न त्याग[4] सन्धिपाठयोः[5] ॥
द्रुतं[6] पठन् यथाशास्त्रं [72] मध्येऽन्त्ये यद् विलम्बते[7] ॥

सा यतिः। स च विलम्बोऽर्धान्ते सन्धिपाठत्यागात्मकः। तेन पूर्वार्धस्यान्ते पाठसन्तानो विच्छेत्तव्यो नान्यत्र। संहिता च न पूर्वार्धान्तस्य शब्दस्योत्तरार्धेन कार्या। यथा—दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा। आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ इत्यत्र तदाऽऽचार्यमित्यनयोः संहिता न कार्या[8]। तथा—यद्धोमधूमधवलोदयमध्यलावण्यलाञ्छिता। अभ्यादरचयच्छुचकादिमुखच्छुरधवलमचिरता ॥ इत्यत्राचिताऽभ्यादित्यनयोः संहिता न कार्या। अन्यत्र कार्यैव।

अर्धे पादेऽन्त्य भागे च क्वचि[10] च स्यायतिस्त्रिधा।
त्रिधा यतिश्च शब्दान्तसमासपदमध्यगा ॥

अर्धे अर्धान्ते पादे पादान्ते पादभागे च क्वचित् क्वचिदिति चतुष्कारो यतिः। सा च त्रिधा—शब्दान्तगा, समासमध्यगा पादमध्यगा[11] चेति।

आद्ये स्थाने यतिरवाद्यो[12] मध्यमे स्यादमध्यमे।
अन्त्ये तिस्रो यथा[13] सन्धिः पादयोः स्यात् परादिवत्[14] ॥

अर्धान्ते शब्दान्ते चैव यतिः[15]। नार्धे द्वे पदेन शब्देन समासेन वा[16] सन्दध्यात्। पादान्ते शब्दान्तगा समासमध्यगा स्यात्। नान्यथा। नैकेन शब्देन द्वौ सन्दध्यात्।

(1) A : सामान्यायां (2) A : पाठस्य मध्ये चान्ते (3) A : वा मध्ये (4) M : पाठविलम्ब (5) A omits this line. (6) M & S : तत (7) A reads the last foot : यद्विलम्बति सा यतिः (8) M omits त्याग (9) A omits this verse of the *Gītā* and the comments thereon 10) A : स्थानेषु (11) A : शब्दगा (12) M & S : आद्या (13) A : अर्ध॰ (14) A : परादिवत् 15) A : अर्धशब्दान्तगैव यतिः : M : इत्यन्ते शब्दान्ते चैव यतिः (16) A omits समासेन वा

समासमध्यगा यथा—नमो लोकतमोबालच्छिदे परमतेजसे इति। पादमागे स्थितोऽपि यतय। पादान्त्यस्य शब्दस्योत्तरपादाद्येन[17] यणादेशसन्धिः स्यात्। स च परस्य पादस्यादिः स्यात्। न पूर्वस्यान्तः। तद्यथा—तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही इति। तथा—स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि' (*Raghu.* II 17$^{ab}$) इति।

पादमध्येऽपि परादिरेव यथा—गाढोत्कण्ठां गुरुषु दिवसे-[73]-ष्वेषु गच्छत्सु बालाम् (*Meghadūta.* II. 23$^{c}$) इति। यणादेशसदृशोऽ[18]पि क्वचिदिति. परादिन्वञ्च। यथा—मातङ्गस्य स्नुतमदजलस्येव पृक्ताः कपोलमिति।

पूर्वान्तस्त्वन्यसन्धिः स्यात् भाग एकाक्षरो न चेत्। अन्तस्तु सन्धिपादान्तशब्दस्योत्तर-पादाद्यो न भवति। पूर्वस्य पादस्यान्त्यः स्यान्नोत्तरस्यादिः। सन्धिना च विभक्तस्य शब्दस्य परो भाग एकाक्षरो न स्यात्। यथा—विनायकाय मातङ्गाननाय महते नमः। ब्रह्मादिकीटपर्यन्तं यत्प्रसादवशाः क्रियाः॥ इति।

भागौ पूर्वपरान्तैकवर्णौ[19] चेत् पादमध्यगा यतिः। विभक्त्य[20] पूर्वापरौ भागौ नैकवर्णौ चेत् पदम[21]ध्येऽपि यतिः स्यात्। यथा—पर्याप्तं तत्र पुष्णीयति महति जन इति।

उपसर्गेऽपि कुर्वीत पादान्तार्धान्तयोर्यतिम्।
यथाशोभं यतिः कार्या[22] सर्ववृत्तेष्वपि स्वयम्[23]॥

उपसर्गेऽपि पद[24]मध्येऽपि क्रियत एव यतिः। यथा—एवं तावद्विरोधादिदमपि तु परिच्छिद्यते देहमात्रम्। इति॥

सर्वत्र यथाशोभं यतिः कर्तव्या। क्वचित् क्वचिदुपदेशः शोभाप्रदर्शनार्थः। क्वचित् संज्ञान्तरार्थः। यथा—मावर्जुनवक्त्रौ चेदिति। क्वचिदस्फुटत्वात्। यथा—ऋषभगजविलसित इति। इति यत्युपनिषदः॥

अथ गायत्र्यादीनां समवृत्तान्युच्यन्ते। उक्तादीनामप्रसिद्धत्वात् प्रस्तारादिभिश्च सिद्धत्वान्नोक्तानि। तत्र गायत्र्याम्—

॥ ६ ॥ तनुमध्या त्यौ[25] ॥ २ ॥

पादश्चेदित्यनुवर्तते। तयौ गणौ यदि[26] क्रमात् पादस्यावयवौ तद्वृत्तं तनुमध्या[27] नाम। अन्ये तादृशास्त्रयः पादा द्रष्टव्याः—

रामां तनुमध्यां गच्छेदनुवृत्ताम्[28]।
यो भोक्तुमिच्छेद्भर्ता शतमायुः[29]॥

(17) M: °पादान्त्येन (18) A: यणादेशसदृशो° (19) A: पूर्वापरौ नैकवर्णौ (20) A adds शब्दस्य (21) All the MSS पाद° (22) A adds: कर्तव्या क्वचित् क्वचित् (23) M reads the fourth foot: सर्वत्र हलन्तेन तु। (24) All the MSS: पाद° (25) M: तनुमध्यान्त्यौ (26) A: यति (27) M: तनुमध्यमा (28) A: अनुरक्ताम् (29) A reads the fourth foot: नो चातु विरक्ताम्।

अपि च। शास्त्रान्तरेष्वन्यान्यपि बहूनि [74] वृत्तान्युक्तानि। तान्यप्रसिद्धत्वात् प्रस्तारादिभिः सिद्धत्वाच्चा[30]चार्येण नोक्तानि।[31] तेषु कानिचिल्लक्षणेनोदाहरणेन च स्थाने स्थाने प्रदर्श्यन्ते।

तत्र सौ द्वौ रमणी नाम वृत्तम्—

अनुरागवती रमणीह कृता[32]।
स्मितपूर्ववचो विकृतावयवैः॥

यौ द्वौ विचित्रम्—

विचित्रश्च दृष्ट्या करोतीप्सितं या[33]।
कटाक्षं क्षिपन्ती वधूः सानुरक्ता॥

रमौ मालिनी—

तिष्ठते पत्ये या मालिनी सद्रत्ना।
गायति च्छन्ना वा साङ्गनाऽविन्नेहा[34]॥

अथोष्णिहि—

॥ ६ ॥ कुमारललिता ज्सौ ग् ॥ ३ ॥

जसौ गुरुश्च कुमारललिता। सूत्रमेवोदाहरणम्। केचिद् योः पञ्चसु यतिमाहुः। तद्यथा—

भुजावपि विभूषाः[35] कुचावपि च नाभिम्।
पतीं सहजरागा[36] स्त्रियः प्रकटयन्ति॥

अपि च। मसौ गश्च मदलेखा—

भ्रूक्षेपेण ललाटेनोत्कम्प्या[37] मदलेखाम्।
या दृष्ट्वा[38] पुरुषं स्मौ धत्ते साऽप्यनुरक्ता॥[39]

रसौ गश्चोद्धता—

अंशुकं विनमन्ती विक्रियाः सहभेति।
उग्रमापगमाद्दीरुद्धताऽप्यनुरक्ता॥

रयौ गश्च शान्तिः—

या विमुच्य वैरान् स्वान् सन्निधौ निबध्नाति।
याति शान्तिमुद्वीक्ष्य क्रोधनेऽपि सा स्निग्धा॥

30) M drops च (31) M adds तथा ; S : तेष्वेव (32) A : कथिता (33) A reads the first hemistich : विचित्रश्च दृष्ट्या भ्रुव करोति क्षितीशम्। M reads दृष्टा करोतीप्सितं (34) A : साऽङ्गना ॥ स्नेहा ; M : साऽङ्गनापि स्नेहा (35) M : भूजा विभूषा ; S : भुजावपि विभूषा (36) A, M, T & S : सरागा ; M has a lacuna mark after ग. A, T & S have none. (37) M : °कोत्कम्पी (38) M : दृष्ट्वा। (39) M : पुरुषं स्मौयन्ते सा पुनरक्ता॥

मौ गश्च कमला—

या चरमस्वपना[40] जागरिणी प्रथमम् ।
सा च भवे सरसा स्त्री कमलेव दरौ ॥[41]

एवं[42] यदि मगणास्त्रयो गुरुश्च पंक्तौ चित्रपदा नाम वृत्तम् ।[43] यदि मगाश्चत्वारोऽतिजगत्यामक्षरुचिर्यदि पञ्चाष्ट्यां पद्ममुखी संगताऽत्यष्टयो[44] वा यदि षड्धृत्यां कुसुमं यदि सप्ताकृत्यां मदिराऽतुला[45] वा । यद्यष्टौ मा गुरुश्चाभिकृतौ वितानमेव ।

अथानुष्टुभि—

## [75] ॥ ६ ॥ माणवकक्रीडितकं[46] भ्तौ ल्गौ ॥ ४ ॥

भतलगा माणवकक्रीडितकं नाम वृत्तम्—

माणवकक्रीडितकं ग्राम्यवचो[47] नर्म लमम् ।[48]
शाठ्यमिति स्त्री कुरुते पुंसि न या रागवती ॥

## ॥ ६ ॥ चित्रपदा भौ गौ ॥ ५ ॥

भौ द्वौ गौ च चित्रपदा—

एकतमाभ्यनुरक्त[49] भ्युज्झति यं सकुलं स्त्री ।
अन्यजने यदि सक्ता चित्रपदा विकृतिर्हि ॥

तथा च यदि षड् भगणा गुरू च द्वौ कृतौ सरोरुहनेत्रा, यदि सप्त विकृतौ मयूरगतिः, यद्यष्टावुत्कृतौ प्रविराजितम् ॥

## ॥ ६ ॥ विद्युन्माला मौ गौ ॥ ६ ॥

मौ द्वौ गौ च विद्युन्माला—

शय्याद्वेषो गात्रस्फोटो जृम्भा चोच्चैः कोपश्चाग्रे ।
यस्याः सान्तर्निःस्नेहा स्त्री दृश्या विद्युन्मालेवादृश्या ॥

एषापि चित्रा च । इयमनुष्टुभि सर्वगुरुकम् ।[50] एवं यद् गायत्र्यां तत् सावित्री, यदुष्णिहि तद् गान्धर्वी, यद्बृहत्यां तद्रूपमाला[51] यदतिधृतौ तदैरावती ।[52] आनुष्टुभानां[53] चतुर्षु चतुर्षु[54] यतिः । अपि च—मभौ गौ च द्वौ हंसरुतम्—

स्निग्धा कम्पयति गात्रं दृष्ट्वा[55] वा श्वसिति[56] चाग्रे ।
निस्नेहा वदति रुक्षं प्रोक्ता हंसरुतवाचा ॥

(40) A : च हीन स्वपना (41) M : मता । (42) M omits एवं (43) A & M add स्यात् (44) A : सुरदाम ; M : सरमातसथ (45) A : अतुलनामा (46) M माणवकक्रीडितकं (47) A : ग्राम° (48) M : नर्मनमम् (49) M . सत्यपि चत्यनुरक्त (50) M adds वृत्तम् ; A adds एवं (51) M omits यद् हत्यां तद् पमाला ; S omits रूप° (52) All the MSS. except T read a word माला here. (53) A adds : उत्मनाश्च (54) A त्रिष ( ) M दृष्ट्वा । (56) A : श्वपिति ।

यौ द्वौ लगौ च मनोज्ञम्—

विरक्ताभिमानोद्धता न यान्ति[57] रुणद्धि प्रियम् ।
मनोज्ञश्च[58] यत्ते मुखं मुदा योषिते भर्तरि ॥

नौ द्वौ लौ चालिः—

अपमधु सुमनसमलिरिव पतिरपि ।
विरसयुवतिमपमलमभिसरति ॥

इदमेव त्रिगुणमष्ट्या लघुपदं[59] नाम वृत्तम् । अथ बृहत्यां—

॥ ६ ॥ भुजगशिशुसृता नौ म् ॥ ७ ॥

नौ द्वौ मश्च भुजगशिशुसृता[60]—

[76] युवतिरसुरता[61] स्पर्शे मुखचपलतया[62] क्रूरा ।
कुटिलगतिदुराक्रान्ति[63] भुजगशिशुसृतां द्वेष्टि ॥

॥ ६ ॥ हलमुखी नौ स् ॥ ८ ॥

रनसा हलमुखी[64]—

योषितं त्यज[65] हलरसां[66] घर्घरध्वनिमभि[67] मरम् ।[68]
घस्मरामति[69] क्रूरहनु[70] सूकरीमिव हलमुखीम् ॥

त्रिभिः षड्भिश्च यतिः । अपि च । मो मौ च हावलि—

अद्रिविवरे बाण[71]स्तस्या येन[72] ह्यासे स्पर्शो[73]ऽनिष्टः ।[74]
यच्चित्तमेव न्यस्ता बुद्धिर्मुञ्चसि[75] कस्यां[76] निःस्नेहायाम् ॥

पञ्चसु चतुर्षु च यतिः । अपचित्रा च । सजसा[77] ललितम्—

ललितं वचो वपुधनं कुलमन्विता च वपुषः ।
सकलं वृथैव विरसां ललनामवाप्य विमुखीम् ॥

मौ द्वौ रश्चोत्सुकम् —

योषिति यत्र[78] नरो नु को न्यस्यति जीवितमप्यसौ ।
उत्सुकमेव विहाय तं याति परं विरसा निजे ॥

अथ पंक्त्याम्—

(57) A : मां तु (58) A drops च (59) A : लघ्वं (60) M omits this sentence ; S : शिशुभृता (61) A : युवती सुन्दरी (62) A : मुखचलतया (63) A : मुधा कीर्ति (64) M drops the line. (65) M & S : त्यजति (66) M : हरमाद् (67) M drops ध्वनि (68) A : अभिरराद् (69) A : घर्घरध्वनिमती° (70) M : हनुं (71) M : बान° (72) M : मर्त (73) A : अहस्पर्शो (74) A : अनिष्ट (75) M drops the third foot and मुञ्चसि (76) M : कस्मात् (77) M adds अङ्गुला : S adds च (78) S यत्तु ।

## ॥ ६ ॥ शुद्धविराण् मसौ जगौ ॥ ९ ॥

मसजगाः शुद्धविराट्—

य[79]ज्जेता कुसुमायुधोऽप्ययं कामः शुद्धविराट् कुलान्यपि ।[80]
तत् स्नेहेन[81] दृढां वराङ्गनां तां कृत्वा न विरक्तकास्त्रियम् ॥[82]

अपरान्तिका च ।

## ॥ ६ ॥ रुक्मवती भ्मौ स्गौ भूतेन्द्रियाणि ॥ १० ॥

भमसगा रुक्मवती । पञ्चवर्णान् पठित्वा यतिः स्मृता[83]—

यत् सुभगत्वं गर्वनिरासादन्यगुणोक्त्या[84] वाञ्छति लोकः ।[85]
तस्य विपाको[86] रुक्मवती श्रीः[87] प्रेमवती वा[88] स्त्री न तु रुक्षा ॥

उपचित्रा च । पादान्ते प्राप्ता यतिः । पुनरुपदेशात्तु[89] क्वचित् पादान्तेऽपि न यतिरिति सूचयितुम् तेन पदाद्युर्गायत्र्याधस्तान्न पादान्ते नार्धान्ते यतिरिति, तत् सिद्धम् ॥

## ॥ ६ ॥ पणवो[90]म्नौ य्गौ ॥ ११ ॥

[77] मनयगाः पणवः—

यत्कामो[91] जयपणवध्मानं[92] लोकेषु[93] त्रिषु तनुते तच्च ।
स्त्रीणां भ्रूयुगधनुषो[94] वीर्यं स्निग्धानां किल[95] न विरक्ताणाम् ॥

पञ्चसु पञ्चसु यतिः । मात्रासमकञ्च ॥

## ॥ ६ ॥ मयूरसारिणी र्जौ र्गौ ॥ १२ ॥

रजरगा मयूरसारिणी—

स्त्रीर्मयूरसारिणीमुखाः[96] यत्र भर्जयन्ति लब्धगौरमव्यैः ।
तच्च ता विरक्तचेतसश्चेन्नानुरक्त[97]चेतसां निषेधः ॥

(79) A ये (80) A · कुलान्यपि (81) A स्नेहो (82) M विरक्तकस्त्रियम् (83) A omits this sentence (84) M · गुणोक्त (85) M · लोक ; [illegible] श्लोक (86) M · विपाके (87) M · स्त्री (88) A चा (89) M °रुपदिष्टत्वात् (90) M · पटवा (91) A · °कामा (92) A · ध्मानो ; M धन्य ; S ध्वनि (93) A लोकेष्वपि ; M · केषु (94) M : °धनुषे (95) A पुरु च in place of किल (96) M reads · स्त्रीं मयूरसारिणीं यत् (97) A °चानुरक्त°

## ॥ ६ ॥ मत्ता म्भौ सगौ समुद्ररसाः ॥ १३ ॥

ममसगा मत्ता। चत्वारः षट् च यतिस्थानम्[98]—

यद्दामत्वं[99] युवतिषु मत्ता वृत्त[100] वित्तं जहति तनुश्च।[101]
तत्तत्[102] प्रेम प्रियमधुपाना[103]न्निःस्नेहामि[104]च्छति न[105] सङ्गम्॥

वानवासिका[106] च।

## ॥ ६ ॥ उपस्थिता त्जौ ज्गौ ॥ १४ ॥

तो जौ द्वौ गुरुश्चोपस्थिता—

यदा दुरवाप्तपरचयं हित्वा जनयोऽप्यमर्षचला।[107]
स्निग्धो प्रसममुपस्थिता[108] दृष्ट्वा तपसोऽपि[109] विरागिणः॥[110]

अपि च। सान्त्यौ गुरुश्च[111] मेघवितानम्[112]—

यदमी अपि[113] मेघवितानं[114] सरसाः समवेक्ष्य रमन्ते।
तदपि प्रियया रसवत्या विरसा गृहसंघटनायै॥[115]

आपातलिका च। रः सौ गश्च मणिराग[116]—

यज्जनः कुरुते मणिरागैरंशुकैश्च परिष्कृतिमङ्गे।
तद्धि वीक्ष्य वधूमनुरक्तां देहदोष[117]दृशेव विरक्ताम्॥

मतयगाश्चम्पकमाला—

यस्त्यजति स्वं विरहग्लानं[118] चम्पकमालामृदुलं देहम्।[119]
तच्च सरागप्रमदाहेतोस्तर्हि[120] विरक्ता वनितास्त्याज्याः॥

पञ्चभिः पञ्चभिश्च यतिर्मात्रासमकश्च। मतयगास्तडिन्माला [78]—

यद् दान्तं[121] विद्युद्द[122] प्रीत्यामे[123]वं मन्या न मोक्षराद्स्त्वेषु।
सोऽपि स्नेहे सरागरामाणां[124] मानोऽभावो पुनस्तडिन्माला॥

अथ त्रिष्टुभि—

(98) M चतुर षट् षष्ठिका यतिस्थाने ; [illegible] चतुर षट् च षष्टिका यतिस्थान (99) A मात्रा ; M. यद्दामर्थं (100) A · वृत्तिषु मत्पानृत्तम् (101) A तनुं तत्त्व (102) A lacuna ; S : तदन् (103) A & M प्रियमधुपानां (104) M · निःस्नेहामि (105) A · तु (106) M · वानवासिर्वं (107) M . चला (108) A · प्रसमानुपस्थिता ; M · उपयातानुपस्थितां (109) A तपसे ; M तपसो (110) A · स्वरमाग ; M · विरागिणो (111) A adds आदि ; M & [illegible] · गुरुश्चादि (112) A · मेघवितायमि ; M · मेघविन्तानम् ; B . मेघवितानम् (113) A आदिनेषु ; M · अपि (114) A · °वितानन् ; M मेघविततानम् (115) A · विरसा गृहसंघटनायै M · विरसा गृहसंघटनायै (116) M adds : र सौ द्वौ गुरुश्च मणिराग (117) M: सान्निध्य° (118) A · विरहग्लानि ; M विरहग्लानं (119) M : चम्पकमाला मृदुमर्दं मम् (120) A : °रक्तास्तु ; M : रक्तामि° (121) A : य दन्तान्त ; M : यद्‌द्‌दन्ते (122) A · विद्युद्दं ; M : विजय (123) A . धाम्नान् , M : धम्नाम ; S · धम्नाम् (124) M : सापि स्नेहे विरागिरामाणां

## ॥ ६ ॥ एकरूपं म्सौ जगौ ग् ॥ १५ ॥

मसजा गौ च द्वावेकरूपम्—

> भ्रूवासा[125]द् धन[126]पद्मराजिसज्याद्[127] यस्त्र[128]स्यन्यबलाकटाक्षकायकात् ।[129]
> नासौ क्रुध्यति[130] नैकरूपमात्मने चित्तं हेलनया[131]ऽन्यमेति मावम् ॥[132]

इलिवान्तिका च ॥

## ॥ ६ ॥ इन्द्रवज्रा तौ जगौ ग् ॥ १६ ॥

तौ द्वौ जो गौ च द्वाविन्द्रवज्रा[133]—

> यस्येन्द्रवज्राधिक[134]गोत्र[135]गर्वो विद्यार्थवंशैर्यदि चास्य[136]धार्ष्ट्यम् ।[137]
> नरयन्यदो[138] मन्मथमन्यराणां[139] स्त्रीणां कटाक्षैर्गमितस्य[140] दास्यम् ॥

## ॥ ६ ॥ उपेन्द्रवज्रा ज्तौ ज्गौ ग् ॥ १७ ॥

जतजा गौ चो[141]पेन्द्रवज्रा—

> तदैव[142] छिद्रो[143] विजयो बभूना यत्रैष्वनङ्गास्त्रखजूरिकायाम् ।[144]
> यदा[145] विलासंगमिनाऽङ्गनानामु[146]पेन्द्रवज्रावुभयोरपि श्रीः ॥

## ॥ ६ ॥ आद्यन्तावुपजातयः ॥ १८ ॥

इह प्रमज्ञादिषमवृत्तानीन्द्रवज्रोपेन्द्रवज्रयोः पादसङ्करेणोत्पन्नेः । एतयोः[147] पादावर्धस्यादिरन्तो[148] यदि स्यातामेकस्मिन्नेव[149] श्लोके तदुपजातयो[150] नाम वृत्तानि ।

आख्यानुपजातय इति वक्तव्ये आद्यन्तावुपजातय[151] इति सूत्रन्नाचार्य[152] इमा विपरीताख्यान-कनाख्यानकया व्यावर्तयति ।[153] यदि हीन्द्रवज्रापाद उभयोरर्धयोरादिरेव स्यादुपेन्द्रवज्रापादोऽन्त्य आख्यानकी ।[154] अथोपेन्द्रवज्रापाद आदिरितरोऽन्त्यो विपरीताख्यानकी । तस्मादिन्द्रवज्रापाद एव

125) M भ्रूवासना (126) A : °ध्नुन ; M धून° (127) A पद्मराजिसकजा ; M : पद्मराजि सज्जा (128) A : यस्य ; M : र्जा ; S : यात्र (129) M . कना कटाक्षकायकम् (130) A क्रोध्यति ; M : कुध्यति (131) A : निलमिया ; M : हेलकया (132) A : इत्यमेति (133) A इन्द्रवज्रो (134) A : अधि° ; S अधि° (135) M गात्र (136) A विन्यर्थवशश्च यदस्य (137) M धार्ष्यम् (138) A : द्यान्यतयो ; M नरयदास्यदो ; S : नरयत्यथो (139) M मन्मथमन्थराणां (140) A नमितस्य ; S : कमितस्य (141) A adds द्वौ (142) A तदैव (143) M सिद्द (144) A . खजूरिकायाः ; M : खजू······ ; S : खजूरिकाम् (145) A यथा (146) A विलासाङ्गमिहाङ्गनानां ; M विलासङ्गम हाङ्गनानां (147) A adds वृत्तयोः , M reads यदा पूर्वोक्तयोस्तयोः (148) A आदिरथान्तश्च (149) M : स्यातामेक···कस्मिन्ने (150) A : तदेवोपजातयो ; M तदोपजातयो (151) A drops उपजातयः (152) M drops आचार्य (153) M इमे विपरीताख्यान नयया ख्यानक्या वृत्तम इति ; A : वावर्तयति ; S : वर्तयति (154) M : पादयान्ते आख्यानकी स्यात्

पूर्वार्धस्य परस्य वाऽ[155]ऽदिरन्तश्च स्यात् । पूर्वस्यादिः परस्यान्त इति वा परस्यादिः पूर्वस्यान्त इति वा पूर्वादिः परादिरितिवा पूर्वान्तः परान्त इति वा ।[156] [79] तयोपेन्द्रवज्रापादोऽपि—

यत्राऽपराधोऽत्र न कामिनीनां ताश्चापि पुंसां[157] नयनैः स्खलन्ति ।
स्त्रियः पुमांसश्च तथैव सृष्टा[158] यथा मिथो यान्तुपजात[159]योऽपि ॥
लज्जा गता क्वापि[160] च लज्जितेव[161] सुप्तं क्वचिच्छ्रोत्रपुटे निलीनम् ।
कुलाभिमानो[162] मुनिनैव[163] मुक्तो मुक्ते वधूभिर्नयनाग्रपाशे ॥[164]
तिष्ठन्तु कामाकुल[165]दृष्टिपाता भावाश्च[166] तेषामुपजातिभेदाः ।
एकाऽपि वाणी स्मितमञ्जुरासा[167] करोति पुंसामपरामवस्थाम् ॥[168]

द्वादशोपजातयः । अयञ्च न्यायोऽन्यत्रापि[169]स्यात् । तेन[170] मेघ्रुमानामन्येषां वा वृत्तानां पादाः समाक्षरसंख्या द्वौ द्वावेकभूय भूत्वा द्वादश,[171] त्रयस्त्रय एकभूयं भूत्वाऽष्टादश,[172] चत्वारश्चत्वार एकभूयं भूत्वा चतुर्विंशतिरिति विषमवृत्तानि ।[173] एषा विषमाक्षराणां रात्रूनमिति[174] (V 5) संप्योक्ता। यत् पुन क्वचित्—

पद्मे हि फुल्लाम्बुजपत्रनेत्र नमोऽस्तु ते देव पराप्रमेय ।
प्रसद्य मां पालय लोकनाथ रक्षेह मां[175] भूतशरण्यसद्म ॥[176]

इत्यादिषु प्रथमस्य तृतीयस्य च पादस्य लघ्वन्तत्वं दृश्यते, तदन्येष्वेव[177] विषमेषु लघ्वन्तं गुर्वन्तं वा पाद[178] द्रष्टव्यम् । नेन्द्रवज्रोपेन्द्रवज्रापादसंकरजम् । तयोर्गुर्वन्तत्वात् ।[179] ततश्च यदेके[180] वर्णयन्ति—गन्त इत्यत्र पादान्तेऽपि लघो[181]र्गुरुसंज्ञा विधीयत इति, तदपि[182] प्रत्युक्तम् । विषमेष्वेव तदुपपत्तेः ।[183]

एवं तर्ह्यर्धान्तेऽपि[184] तथैवास्तु ।[185] नैतत् । आर्यादीनामर्धस्य लघ्वन्तत्वासम्भवात् । दृश्यते च[186] इन्वाल्लमर्धं चीनांशुकमिव केतोः प्रतिवातं नीयमानस्येत्यादिषु । तदर्धान्तेष्वेवावश्यं[187] गुरुसंज्ञा विधेया । अन्यथा मात्रासंख्या[188]पकर्षादेव[189] प्रयोगक्षेमत्वाद[190]न्येषामपि गृह्यते ॥[191]

(155) M : पारस्य in place of परस्य वा (156) M reads the sentence पूर्वादि परस्यादिरिति परादि पूर्वान्त इति वा । (157) A : पुंसो (158) A : दृष्टा, S स्पृष्टो (159) M : या उपजात° (160) A : वापि (161) A : चलन्ति ते वा (162) S कुलाभिमानी (163) M : मुनिनैव (164) A °पाशो S : °पाश (165) A : तामाकुल° (166) M : भावश्च (167) M : स्मित मञ्जुरामा, S स्मितमञ्जुरामा (168) M पुंसामिव रामवस्थाम् (169) M drops अपि (170) A adds छन्दस्सु (171) M adds द्वादश विषमवृत्तानि भवन्ति (172) All the MSS. read षट्त्रिंशत् (173) A adds भवन्ति; M drops एकभूयं भूत्वा (174) A : विषमाक्षराणि भूनमिति : M विषमं च रात्रूनमिति (175) M : रक्षो° मा (176) A. cites here *Kumāra* I 3ab. (177) M : तदन्येष्वेव (178) A °मङ्गलं M : प्रयस्तुर्यस्य पादसंकरजा (179) M : इन्द्रवज्रोपेन्द्रवज्रापादसंकरजं तयो गुर्वन्तत्वात् (180) M drops यद् (181) A & M लघ्वन्त्य (182) A drops तदपि (183) M : विषमेष्वेवोपपत्तेः (184) M & S drop अपि (185) A : तथैव मा भूत् (186) M : लघ्वन्तत्वासम्भवात् दृश्यते च । (187) M : तदर्धमेवावश्यं, A : तदर्धे एवावश्यं S : तदर्धस्यैवावश्य (188) A drops संख्या (189) M : °पकर्ष° (190) A : योगक्षेमत्वात्; S : प्रयोगक्षमत्वात् (191) M & S : वक्ष्यते ।

॥ ६ ॥ दोधकं[192] भौ भ्गौ ग् ॥ १९ ॥

भास्त्रयो गौ च द्वौ दोधकम्—

द्यूतवधादिभिरर्थसमीहा[193] देहविपत्फलसाहस-[80]-कर्म ।[194]
दोधकवृत्तमिनीह भजन्ते धृष्टविदग्धवधूजनवश्या. ॥[195]

॥ ६ ॥ शालिनी म्तौ त्गौ ग् समुद्रर्षिभिः[196] ॥ २० ॥

मः तौ[197] गौ च शालिनी। चत्वारः सप्त च यतिस्थानम्—

नीवीमग्रे[198] संस्रयित्वा[199] वसानाः केशानग्रे संकिरन्तोर्विकीर्य ।
लीलां लीला[200]शालिनीर्दर्शयन्तीर्न प्रेक्षन्ते[201] धर्षिता जैनुकामा' ॥

॥ ६ ॥ वातोर्मी म्भौ त्गौ गश्च ॥ २१ ॥

ममता गौ च द्वौ वातोर्मी। चकाराद् पूर्वयतिरनुकृष्यते[202]—

अन्ये तामिर्विजिता[203] वाशिनीभिर्भूयो भूयो हृदि चिन्ताविलासैः ।[204]
त्यक्त्वा लज्जां कुलधर्मांश्च नीत्या[205] संसेवन्ते धूतवा[206]तोर्मिधर्मम् ॥[207]

॥ ६ ॥ भ्रमरविलसितं म्भौ न्लौ गश्च ॥ २२ ॥

मभनलगा भ्रमरविलसितम्। चकाराद्यत्याकर्षः[208]—

दृष्ट्वा क्वापि[209] भ्रमरविलसितान्[210] देशांश्चान्या[211] वनगिरिसरितः ।[212]
कान्तां कामी[213] हृदि ननु[214] कुरुते धन्यम्बन्य[215] शुभमृषिचरितम् ॥[216]

वानवासिका च ॥

॥ ६ ॥ रथोद्धता नौ लौ ग् ॥ २३ ॥[217]

रनरा लगौ च रथोद्धता—

यत्र केवलमनोरथोद्धता नाश्रिताऽपि[218] विकरोति मानसम् ।
तत्र सन्निहितभामिनीजने[219] श्रद्धीत विजयाय कः पुमान् ॥

अपरान्तिका च ॥

(192) M : तोधकं (193) M : द्यूतवदादिभिरर्थसमीहा (194) M देहविकतीफलसाहसकान्तम् (195) M : शालिन्युक्ता द्मौ त्गौ ग् । समुद्रर्षय: (196) S : वेश्याः (197) A adds द्वौ (198) M अग्रे (199) M : संसयित्वा (200) A : लीलां (201) M : प्रेक्ष्यन्ते (202) आकृष्यते (203) M : निर्जिता (204) M : हृदि चिन्ता ; A : हृतचिन्ता (205) A : नित्यं ; S : रीत्या (206) A धृत°, M भूत° (207) A : °धर्मः (208) A : यतिराकृष्यते (209) A दृष्ट्वा क्वाऽपि : M : दृष्ट्वापि (210) A & M भ्रमरविलसिता (211) A : देशाश्चान्या ; M : देशांश्चान्यान् (212) A गिरिवनसलिलाद् : S : गिरिवनसरितो (213) A : कामी कान्ता (214) A : न तु ; M : वर्तु ; S : बत (215) A : अन्यः अन्य (216) A : शुभ ऋषिचरितम् ; M : अन्यशुभमृषिचरितम् (217) M omits the *vṛtti* and illustration on this *sūtra* and runs on to the next *sūtra*. (218) S : नार्पिताऽपि (219) S °भामिनीजने

॥ ६ ॥ स्वागता नौ भ्गौ ग् ॥ २४ ॥

रनभा गौ च द्वौ स्वागता—

पूर्वमेव महिलामधुमत्तः[220] तामिरेव हृदयं हृतशेषम् ।[221]

यत्र[222] क्लिश्यति[223] वपुर्विरहेण[224] स्वागतानि कुरुतानि खलम्य ॥

आपातलिका[225] च ॥

॥ ६ ॥ वृत्ता नौ स्गौ ग् ॥ २५ ॥

नौ द्वौ सो गौ च[226] वृत्ता ।[227] वृन्तेति पाठान्तरम्—

रमयति[228] मनसिरते[229] स्वाङ्ग[230] रमयति युवतिजने विरतम् ।[231]

निपतति विपरिणतो[232] वृत्तात्[233] फलमिव विपरिहृतं वृन्तात् ॥[234]

[81] ॥ ६ ॥ श्येनी जौ लौ ग् ॥ २६ ॥

रजरा लगौ श्येनी—

श्येन्यमूषु कामिनीषु यत्[235]स्मिते दन्तपंक्तिरायता विलान्तरा ।[236]

श्येन्यसौ[237] स्वयं नरस्य रागिणः[238] चित्तमीनहारिणी[239] किमु स्त्रियः ॥

॥ ६ ॥ प्रत्यवबोधो भ्तौ न्गौ ग् ॥ २७ ॥[240]

भतना गौ च प्रत्यवबोधः —

यद्रसदिग्धान्[241] युवतिकलापादीक्षणबाणान्[242] रतिपतिरस्यन् ।

प्रत्यवबोधं हरति नराणां तेन स कान्ते स्मरकुलेऽपि ॥[243]

कुड्मलदन्ती शीर्षा ।[244] पञ्चसु षट्सु च यतिः ।[245] वानवासिका च । अत्र[246] नवम्यो यदि खलु सगणस्तान्तु जगत्यां[247] विदधाति[248] ललनाम् । वानवासिका च ।[249]

नयमा गौ[250] चेदनवसिता[251]—

यदपि वधूनां[252] नेत्रकलापादनवसितेषो[253]र्विभ्रमबाणान् ।

हृदयमभिन्धा मुषति चित्ते वसति[254] ततोऽयं[255] धन्विषु[256] कामः ॥

220) M · महिमामधुहृत (221) A : हृतशेष (222) A · अस्य (223) A : कृश्यति (224) M : विरहेण ; S : विरहे च (225) M · उत्पातलिका (226) M adds द्वौ (227) M & S add नाम (228) A · कम्पयति (229) A : मनसि यो (230) A : स्वास्य ; S : स्वान्तं (231) M & S · विरतम् (232) M विपरिणतं (233) M : वृन्तात् (234) M : तावत् ; S : वृत्तात् (235) A · या (236) A · आयतघनान्तरा (237) A : श्येन्यसौ ; S : श्येन्यसौ (238) A drops रागिणः (239) A : कामिनी रिति ; M · चित्तमीन हरिणी (240) A does not recognise this as a separate *sūtra*. (241) M द्रुमरसमान् (242) A · ईक्षणबाणा (243) A · कुलेषु ; S · कुलानि (244) A drops शी ; M · कुड्मलनादि यो (245) A · सप्तसु यतिः (246) A : यत्र (247) M : जगतः सतां (248) M drops विदधाति (249) A adds वा after ललनां ; M drops वानवासिका च ; : ललनां वानवासिका वा (250) A drops (251) M · चेद्गलवासिता ; S : च नवासिता (252) A : धानां (253) M : जनवसितेषु (254) A : भवसति (255) A : तत्तो हि (256) A धनीषु ; S : धन्विषु ।

षट्सु पञ्चसु[257] यतिरुपचित्रा च ॥

अथ जगत्याम्—

॥ ६ ॥ जगती ॥ २८ ॥

अधिकारोऽयमाऽध्यायपरिसमाप्तेः । ननु[258] किमर्थोऽयम् ? अक्षरसंख्ययैव[259] गायत्र्यादिवज्जगतीति गम्यते ।

उच्यते—तोटकं स इत्यादिष्वनुक्तसंख्येषु द्वादशानामेवाक्षराणां ग्रहणं स्यादिति । तथापि[260] पूर्वैव[261] पुटद्रुत[262]विलम्बितादीनां द्वादशाक्षराणां मध्ये पाठादेव तत्सिद्धेः ।[263]

एवं तर्हि, पूर्वापरपदार्थवशात् संख्याऽस्मिन् तन्त्रे[264] नाश्रीयत इति सूचयितुम् । तथा चोक्तादीनां पूर्वस्मात् संख्यानियमो[265] नाश्रितः ।[266] समानीप्रमाणीवितानानां पादस्यानुष्टुब्वक्त्रमिति (5/9)त्यस्मात् परस्मादष्टाक्षरत्वं नाश्रीयते[267] । स्वरूपेणोपात्ता[268] सङ्ख्याऽऽश्रीयत[269] एव[270] यजुषां षट् साम्नां द्विरित्यादिषु । एत दवाम[271] संख्या[272] क्वचित् स्वरूपेणोपनीयते[273] क्वचिद्वस्वादिभिर्केतैः ॥

[82] ॥ ६ ॥ वंशस्थं जतौ जरौ ॥ २९ ॥

जतजरा वंशस्थम्—

रमैः सृजन्तीं मदरागविभ्रमा[274]
निषेव्य हालामिव वारवारुणीम् ।[275]
पतत्य[276]धीका वरवारवाणिनो[277]—
मपि स्ववंशस्थजनोचितक्रियाः ॥[278]

॥ ६ ॥ इन्द्रवंशा तौ जरौ ॥ ३० ॥

तौ जरौ चेन्द्रवंशा—

अर्थेनमन्तीषु[279] न हार्दसंस्तवे[280]—
र्यो[281] वारमुख्यासु रतोऽतुलास्वपि ।[282]
तस्मिन्न[283] जातु क्षतकीर्तितेजसि[284]
श्रीरिन्द्रवंशाभिजनेऽपि तिष्ठति ॥

(257) M : पञ्चसु षट्सु (258) A adds च (259) A : सङ्ख्ययैव (260) M : अथापि, S तत्रापि (261) A व्यर्थ एव (262) A : °धृत° (263) M : पाठादेतत्प्रसिद्धेः (264) A : तत्र (265) A drops संख्यानियमो (266) M : नाश्रीयते श्रित (267) A drops पर... श्रीयते; M : adds उक्तादीनान्तु न पूर्वस्मात् संख्यानियमो (268) A रूपेण रूपात्तत् (269) M सङ्ख्यापूर्वा समाश्रीयते (270) A ends the sentence here. (271) M adds च (272) A संख्यया (273) A : स्वरूपे नोपनीयते (274) M : मदिरा गतिभ्रमा (275) A : वारवाणीम् (276) A : पतत्य° (277) M : वरवाणि (278) M क्रियाम् (279) A अथोन्नमन्तीषु (280) A : सहार्दनास्तवे ; B : महार्घसंस्तवे (281) M : या ; S ये (282) A °हित्र : M : [illegible]

॥ ६ ॥ द्रुतविलम्बितं न्भौ भ्रौ ॥ ३१ ॥

नो भौ द्वौ रश्च द्रुतविलम्बितम्—

भवरसस्य परस्य विकारिका
स्वपरसास्वतिरागुणासु च।
रुचिफलं गणिकासु मुधा[285]न्नृणां
द्रुतविलम्बितमग्निशिखास्विव॥[286]

॥ ६ ॥ तोटकं सः ॥ ३२ ॥

सगणाश्चत्वारश्चेत्तोटकम्—

विटवीरजनस्य गृहाः कुलटा—
स्वजना अपराधशराः[287] पुत्राः।[288]
श्रुतमस्य महा[289]समरस्य कथा
अपि तोटकगन्धक[290]नाटकवान्॥
[291]तोटकमेव सगणाः[292] षट् चेद्भगौ[293] ललितं नाम वृत्तम्॥[294]

॥ ६ ॥ पुटो नौ म्यौ वसुसमुद्राः ॥ ३३ ॥

नौ द्वौ मयौ च पुटः। अष्टौ चत्वारश्च यतिस्थानम्——

विटजन[295]सहवासा द्यूतकारी[296]
रुचिरसनयाया[297] सत्क्रियार्थैः।
अशुकमपि[298] भजन्ते[299] शुल्कमायाः
पुटमिव[300] कुसुमानां पुष्पगन्धाः॥[301]

(285) A : फलं (286) M : °शिखामिव (287) M : स्वजनानपराधशरा (288) M : पुत्रा ; S : पन्था (289) A : महत्° (290) A : तोटकं गर्भ° (291) A adds before this : नाद्ये संरम्भगाया वाक् (292) M drops सगणा (293) A : भतिभृतौ (294) M adds स्यात् (295) A : विटजन° (296) A : दृष नारी ; S : द्युम्ननार्यं (297) A : धनमहसामा ; M drops रुचिर° ; (298) M : अनकमपि ; S : अगुर्वमपि (299) A : भजन्ति (300) M : पुनमिव (301) M commits Haplology here and drops the following lines including the next *sūtra* and its illustration (first half) ; A : °ण्णाई ।

## ॥ ६ ॥ प्रमुदितवदना नौ रौ ॥ ३४ ॥

नौ द्वौ रौ च द्वौ प्रमुदितवदना। चञ्चलाक्षी नौ राविति केचित् पठन्ति—

न मदनमृगचञ्चलाक्षी भजेत्[302]
प्रमुदितवदनाश्च वेश्याङ्गनाम्।
त्यजति हि[303] धनलोलुपां तां[304] स्मरो
न सुरभिरिति[305] शालभञ्जीमिव ॥[306]

## ॥ ६ ॥ जलोद्धतगतिः जसौ जसौ रमतंत्रः ॥ ३५ ॥

जसौ द्विकौ जलोद्धतगतिः। षड्साः षड्तवो[307] यतिस्थानम्—

गुणोद्धतगतिः कुलोत्तरवधूः[308]
घनोद्धतगतिः सुमाननवधू।[309]
तनूद्धतगतिः पणोचितवधू.[310]
यथा तनुनदी[311] जलोद्धतगतिः ॥

## [83] ॥ ६ ॥ भुजङ्गप्रयातं यः ॥ ३६ ॥

यश्चत्वारो भुजङ्गप्रयातम्[312]—

गलत्कञ्चुकान्तैर्बहिः स्नेहकान्ता[313]
परेष्वासजन्ती[314] रमं प्राणमूल्यम्।[315]
भुजङ्गप्रयातं पदं घृष्यमाना[317]
भुजङ्गीव वक्त्रे[318] न वेश्या[319] निवेश्या ॥[320]

षड् यतिरिति केचित्। एवं याः षट्चेद् ताराप्यायनी[321] नाम वृत्तम् ॥

(302) A : भजतु मदनमृगचञ्चलाक्षीं ; M: न तु ननमृगचञ्चलाक्षीं , S : भजतु (303) A drops हि (304) A : मदलोलकान्तां, S: वद लोलुपान्तां (305)A M&S: सुरतिरिति (306) A. सालभञ्जीमिव , M. सालभञ्जमिव (307) A: षट् षट् (308) M : कुलोत्तरवधु , S. कुतो नरवधू (309) A : सुमध्यमवधू (310) M : पणोचितवर (311) M : यथैव ललना ; S. यथा तुलना (312) M omits the name. (313) M : कञ्चुकाग्रैः (314) M & S: स्नेहकारैः (315) A : परेष्वानयन्ती (316) A रम प्राणपूज्याम् , M : रसप्राणपूज्यम् (317) M : पदङ्घ्रि समाना ; S : वदन्तीष्यमाना (318) A : वक्त्र (319) M : विवेश्या (320) A & M : निवेश्या (321) A : षट् चेद् त्रुताप्यायनो ; M : षट् चोद्दनौ उत्ताप्यायनी

## ॥ ६ ॥ स्रग्विणी रः ॥ ३७ ॥

राश्चत्वारः स्रग्विणी—

चन्द्रकान्तप्रभा[322] चन्द्रशाला शुभा
मत्त[323]वेश्याङ्गना मण्डिता[324] स्रग्विणी ।
यत्र तत्र स्मरोऽ[325]नङ्ग एवाङ्गवान्[326]
स्यादिति[327] प्रायशः पिङ्गमंसत्कथा ॥[328]

अर्धाप्यर्धे यतिरिति केचित् ॥

## ॥ ६ ॥ हिमविकरा न्यौ न्यौ ॥ ३८ ॥

नयौ द्विकौ हिमविकरा—

नयगुणयुग्मं रसयुगयन्या[329]
हिमविकरा[330]स्यादुगमललितं वा ।[331]
कुसुम[332]विचित्रे स्यपरमतेऽसौ
मदनविकारैस्यपरमनेऽपि ॥[333]

वानवासिका च ॥

## ॥ ६ ॥ शशाप्लुता[334]त्यौ त्यौ ॥ ३९ ॥

तयौ द्विकौ शशप्लुता—

स्पृष्टाऽप्यधि[335]पादं मञ्जीरकशिञ्जा[336]
कर्णे[337] शुभ्राशौ[338] हस्ते वलयानि ।
कण्ठे मणिमाला वेशेषु[339] वपुषा
कामग्रहपीडां[340] को नाम सहेत[341] ॥

अर्धे यतिः । मणिमानेत्यन्ये[342] ॥

(322) A °निशा ; S °निभा (323) M. मत्त° (324) M मण्डित° (325) A स्वरो (326) A मद एवाङ्गना ; M °नङ्गशाङ्गवान्, S. मद एवाङ्गवान् (327) M : स्यति (328) M °प्यपुमंसत्कथा (329) A : हिमरसकथा (330) M हिमकविकरा (331) गजललितं (332) A किंचिद ; S विसम° (333) A. मदनविकारैरप्यपरमने च ; M : मदनविकारैरप्यपरमनेऽपि (334) M शशप्लुतौ (335) A omits the first four letters (336) M : मञ्जीरकमिञ्जा (337) M & S कण्ठे (338) M शुभ्राशौ (339) M वशेषु (340) M कामगृहपीडां (341) M हुस्ते, S सहते (342) A adds पठन्तीति देव । तां शशप्लुतां मणिमानेति केचित् पठन्ति ।

॥ ६ ॥ प्रमिताक्षरा स्जौ सौ ॥ ४० ॥

स्जौ सौ च द्वौ प्रमिताक्षरा—

प्रमिताक्षरेण वचनेन हित[343]
कथयामि ते[344] शृणु च तत् कुरु च ।
गणिकाश्रितामपि पुरीं सततं
भुजगाश्रितामिव[345] तरो[346] जहिहि ॥

॥ ६ ॥ वैश्वदेवी मौ याविन्द्रियर्षयः ॥ ४१ ॥

मौ द्वौ यौ च द्वौ वैश्वदेवी । पञ्च सप्त च यति[347]—

पूर्वाषाढाषाढाप्रभावे[348] सहाया[349]
नित्यभ्रष्टानां[350] मूलसस्थानवृत्ते: ।
अग्रे कुम्भस्य स्थायुका चन्द्रकान्ता[351]
रूपाजीवा स्याद्वैश्वदेवीव[352] तारा ॥

चन्द्रकान्तेत्यन्ये[353] ॥

[84] ॥ ६ ॥ कान्तोत्पीडाम्भौ स्मौ समुद्रवसवः ॥ ४२ ॥

भमसमा: कान्तोत्पीडा । चत्वारोऽष्टौ च यतिस्थानम्[354]—

कुर्वन्त्येषा कुलभवकान्तोत्पीडा[355]
विभ्रेषस्य[356] स्थिरकुलमर्यादानाम् ।
भ्रयत्स्नेहा[357] क्षणमिव नीलीरागा
दोषैर्वेश्या जलधरमालातुल्या ॥

जलधरमालेत्यन्ये ॥[358]

॥ ६ ॥ नवमालिनी न्जौ भ्याविति[359] ॥ ४३ ॥

नजभया नवमालिनी—

परजनदूषणात् सहवासान्[360]
परपरिधान तुष्णत्रसनात् ।

(343) A : चैत (344) A adds नु (345) M : भुजगान्वितामिव (346) A drops the word, S पुरीं (347) M reads चन्द्रकान्तेत्यन्ये here in a similar manner as in the *vṛtti* on VI. 40 (348) A चाप्रभावे (349) M : सभार्या (350) M तिर्यक्दृष्ट्वा ना, S तिग्मभृष्टानां (351) M : चन्द्रकान्ता (352) A : वैश्वदेवी च (353) A adds . पठन्तीति शेष । वैश्वदेवीं चन्द्रकान्तेति केचित् पठन्ति ॥ (354) M mentions the alternative name here. (355) M कुलभवकान्ता पीडा (356) A : विभेदस्य (357) A : तस्मात् स्नेहात् ; S तस्य स्नेहात् (358) A adds कान्तोत्पीडां जलधरमालेति केचित् पठन्ति ॥ (359) M omits इति (360) A : परजनदूषिता सुमहत्वासात् ; M : परजन दूषणेषु सहवासा ॥

अभिनवमालिनीषु परमाल्यैः[361]
पततु[362]मनो न वारवनितासु ॥

अपि च—नो जौ यत्र तामरसं ललितपदं वा-
भ्रुकुटिकटाक्षविलास[363]विकारैः
कृतविकृतैर्गणिकावदनस्य ।
कथमिव तामरसं तुलनाऽमु-
ष्यललितपदं यदवाप्य[364] न लीनम्[365] ॥

नभजयाः द्रुतपदं[366]मुखरं वा कलहंसा वा—
द्रुतपदं[367] मुखरनूपुरमेषा[368]
भ्रमति मत्तकलहंसगतिश्रीः ।
इति गृणाति गणिका परधर्मे-
णं परिपश्यति[369] गुणान् यदि[370] तस्याः ॥

नसजरा मत्तकोकिलं प्रियंवदा च—
सकलचित्तमति[371]मत्तकोकिल-
ध्वनिरियं मुखयति प्रियंवदा ।
इति च[372] शंसति खलो मनाक्[373] क्वचित्
कलरवैरपनतां[374] परस्त्रियम्[375] ॥

द्वे इमे[376] अपरान्तिके च । तमभरा ललिता —
अङ्गानि सङ्गललितानि[377]विभ्रमा
चित्रा[378] विविधरचना[379] च वागिति ।
एतानि वेत्ति गणिकासु कामुको
जानाति[380] साऽपि मदने न[381] साधुताम्[382] ॥

इति भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिभाष्ये षष्ठोऽध्यायः ॥

(361) M : परमाल्यै (362) M & S : पतति (363) M : °विकास° (364) M : यदवाप्य (365) M : नलिनम् ; S : न लीनम् (366) A & S : द्रुतपदा (367) A : द्रुतपदा (368) A : °नूपुरमेषा (369) M : चर पश्यति ; S : च न पश्यति (370) A : गुणान्यदि ; M : गुणिन्यदि (371) A : °चित्तमपि ; M : सकलचित्त मति (372) M drops च (373) A : धनामनाक् ; M : मनोऽदन (374) A : क...नतां (375) A & S : परस्त्रियम् (376) A drops इमे (377) M : सङ्गि ललितानि (378) A : विभ्रमा चित्रा ; M : विभ्रमाश्चित्रा (379) A : चित्रविविधरचना (380) M : जानन्ति (381) M : मदनस्य ; S मदनेन (382) A : साधुता ; M : समता

# अथ सप्तमोऽध्यायः

[ 85 ] इदानीमतिजगत्याद्यष्टच्छन्दसः क्रियन्ते ॥ तत्रातिजगत्याम्[1]—

॥ ७ ॥ [2]प्रहर्षिणी म्नौ ज्रौ ग् त्रिकदशकौ ॥ १ ॥

मनजरा गुरुश्च प्रहर्षिणी । त्रिकं दशकश्च[3] यतिस्थानम्—

क्रिन्वाऽर्थे[4] युवतिजने च सङ्गपाशा-
नाध्याय[5] त्रिभुवननाथनाथमीशम् ।
कुर्वाणो[6]यमनियमादिकाङ्गयोगान्[7]
मोक्षाख्यां भजति दशां प्रहर्षिणीं ताम्[8] ॥

॥ ७ ॥ रुचिरा जभौ स्जौ ग् समुद्रनवकौ ॥ २ ॥

जभसजगाः रुचिरा ।[9] चत्वारो नवकश्च[10] यतिस्थानम्—

विभावरीमिह[11] रुचिराममीप्सतोः[12]
परस्परं शशितमसोर्जिगीषतोः ।
पुनः पुनः क्षयमुदयश्च पश्यतां
नृणां श्रिये[13] कलहकथा कथं भवेत् ॥

॥ ७ ॥ मत्तमयूरं म्तौ य्सौ ग् च ॥ ३ ॥

मतयसगा मत्तमयूरम् । चकारात् पूर्वयत्यनुकर्षः—

धान्यै[14]र्वन्यैर्वर्तितुकाम.[15] फलमूलैः
ग्लानिं स्वाना[16] न स्मरतीत्यत्र न चित्रम्[17] ।
काष्ठाश्लेषश्वासिजनेनापि[18] विभासा-
वभ्रभ्रे यं[19] मत्तमयूरं वनमेति ॥

(1) M begins the Chapter with the *sūtra* 7/1. ; S begins with तत्रातिजगत्याम् (2) Heretofore A writes ॥ सू ॥ instead of the chapter number at the beginning of each *sūtra* (3) M · त्रिदशकौ (4) M : भित्वाऽर्थे (5) A · °नध्याय (6) M · य तिष्ठन् ; S · कं वा न (7) A · °योग (8) A : प्रहर्षणीनाम् ; M · प्रहर्षिणीनाम् (9) A adds here समुद्रनवकौ (10) M नवकश्च (11) A · विभावरी मुहु (12) M : अभीप्सतो (13) M श्रिये (14) A · धन्ये (15) A · वर्त......काम , S : वर्धितुकाम (16) A · ग्लानदानां (17) A स्मरभीतीत्यत्र न चित्रम् , M स्मरतीत्यत्र विचित्रम् (18) A काण्ठाश्लेषश्वासोजनेनापि , M कष्ठ श्लेष° (19) A : विनाशाभ्राभ्रे यं ; M विना सा वभ्रे भ्रे यन S · बिना° °ण वेषं

अपि च तमसजगा लक्ष्मीः—

लक्ष्मीवता पुरुषवरेण साध्यते
धर्मो विमुक्तिरपरमप्यमीप्सितम्[20]।
लक्ष्मीवतैव कुपुरुषेण हीयते
सर्वं त्वतश्च[21] न चपलस्य[22] सा शुभा[23] ॥

सजौ द्विकौ गश्च जरा, सुमङ्गला वा सुनन्दिनी वा[24]—

चरितं[25] यशांसि विजयात् सुमङ्गलां[26]
रमणीश्च लोकरमणीं सुनन्दिनीम्[27]।
सकलं करोति विमलं धनागमः[28]
पदवीञ्च[29] मोक्षपदनिर्मलोमलाम्[30] ॥

सजौ सौ गश्च[31] भ्रमरः—

कलया चिराय चिनुते निकरेभ्यो
धनमेक एव[32] मधुना[33] भ्रमरौघः[34]।
अपरः पुनस्तदपहर्तुमुपायो-
स्तनुते[35] सदा मतिमतामभियुक्तः[36] ॥

अथ शक्वर्याम्—

॥ ७ ॥ असंबाधा मतौ न्सौ गाविन्द्रियनवकौ ॥ ४ ॥

मतनसा गौ च द्वावसंबाधा[37]। पञ्च नव[38] च यतिस्थानम्-

आश्लिष्टालोलाः[39] सुरभिसुमनसः[40] कान्ता-
स्वेदिन्यायामक्रमरतमुषितश्राताः[41]।
[86] एषस्त्वधिभ्यो[42] घनवन[43]विरमदं गो
वातो व्याचष्टे[44] वन[45]वसतिमसंबाधम् ॥

(20) M drops the first-half of the verse ; S : ॰प्यभावितम्। (21) A & M ततश्च (22) A : नगपरस्य ; M न च कलस्य (23) A : शुभि (24) A : सजौ द्विकौ गश्च सुमङ्गलो वसुनन्दी वा ; M सजौ द्विकौ च विजयसुमङ्गला ॥ सुनन्दिनी वा ॥ ; S : सजसा जगौ च विजयासुमङ्गला। सुनन्दिनी वा ॥ (25) A : चलितं ; S : चक्ति (26) A विजया सुमङ्गली (27) A reads the second *pāda* : ......अनिमा (28) M : विमल सनंगम (29) M : पदवीन्तु (30) A : ॰निर्मलधाम ; M : निर्मलोमगम्, S : निर्मल मम (31) adds wrongly : दौ (32) A : एव (33) M मधुराद् (34) M & S : भ्रमरौघम (35) A : पुनस्तदपहर्तुमुपायंस्त.. ते (36) A : मभिमयारमकोमुक्त ; M : मतिमतामभियुक्त ; S : मतिमया भीतियुक्त (37) M : मतनसा गौ च दौ असंबधा (38) M : पञ्चनव (39) A : आश्लिष्यामोदि ; M : आश्लिष्या लोला (40) M : स्युरभिसुमनस (41) A : स्वेदिन्यायामभ्रुतरमपुषितश्रातं ; M: स्वेदिन्या याम्य मतरत प्रशितश्रातं ; S : स्वेदिन्यायामभुतरसपणश्रातं (42) A : एताधिभ्यो ; M : एकाताधिभ्यो, S : एषाधिभ्यो (43) A : घनवद्॰ (44) M : वा चष्टे (45) A drops वन

॥ ७ ॥ अपराजिता नौ रौ लगौ[46] स्वरऋषयः ॥ ५ ॥

नौ द्वौ रलगा[47]श्चापराजिता । सप्त सप्त च[48] यतिस्थानम्[49]—

प्रसवमुरमयो[50] निलीनमधुव्रता[51]-

स्तरुणकिसलया[52] वनश्रिय[53] आराताम्[54] ।

इयमपि वनजा लता पुरवासिनां

हरति कुसुमिता मनांस्यपराजिता ॥

॥ ७ ॥ प्रहरणकलिका नौ भनौ लगौ च ॥ ६ ॥

नौ द्वौ भनलगाश्च प्रहरणकलिका । चकारात् पूर्वस्यानुकर्षः[55]—

विकसदहसिता परिमल[56]धवला

तरुगतनयना[57] मधुरसरसिका[58]

मृगमदमुदिता वन इह जनता

प्रचलति[59] मदनप्रहरणकलिका ॥

वानवासिका च ॥

॥ ७ ॥ वसन्ततिलका तभौ जौ गौ ॥ ७ ॥

तभौ जौ द्वौ गौ च वसन्ततिलका ॥

॥ ७ ॥ सिंहोन्नता काश्यपस्य ॥ ८[60] ॥

एषैव सिंहोन्नतेति काश्यपस्याचार्यस्य मतेन[61] ॥

॥ ७ ॥ उद्धर्षिणी सैतवस्य ॥ ९ ॥

एषैव उद्धर्षिणीति[62] सैतवस्याचार्यस्य मतेन—

सिंहोन्नताश्च[63]समयाप्तपयोधरश्री-

र्हेमन्तहेमकमला[64] शरदप्रवासा[65] ।

उद्धर्षिणी शुचिगुणैः[66] शिशिरालकान्ता

कान्ता[67]वसन्ततिलका च गिरि[68]र्मुमुक्षोः ॥

(46) A : त्तौ ; M : तृणौ (47) A रसगला॰ (48) M drops च (49) M & S omit स्थानम् (50) M : प्रसन॰ (51) A : लिनिममधुव्रता (52) A : ॰स्तरुण तरुण (53) A वरश्रिय (54) A drops आरताम् (55) M : पूर्वस्यार्क्ष॰ (56) A : विकस्वदहसितपरिगृत॰ (57) A : ॰पत्रनान्तरागनयना (58) M : मधुरसरसिका ; S : मधुकररसिका (59) A : चलति न ; S : प्रचरति (60) M omits this *sūtra* (61) M adds वा (62) M : उद्धर्षिणी (63) M : सिंहोन्नताद्क॰ (64) A & M : हेमन्त-हेमक्मना (65) A : शामदप्रवास ; S : शरभद्रासा (66) M : शिशुगुणै (67) M : का ता (68) A omits च गिरि ; S : न गिरे

॥ ७ ॥ मणिगुणनिकरो[94] वस्वृष्यश्चेत्[95] ॥ १२ ॥

चन्द्रावर्तैवाष्टसु सप्तसु यतिश्चे[96]न्मणिगुण[97]निकरः—

परजनयुवतिषु कृतरणरणकः[98]
कुलमपसदयति[99] तिरयति सुयशः[100]।
स्थगयति गुरुमपि गुणगणमखिलं
कुसुमजरुचिमिव[101] मणिगुणनिकरः[102]॥

[103]इदमलिशकशर्मिन्त्रेगुरुकं वृत्तम्। ईद्दशं गायत्र्यां वृत्तं[104]मिजिदुष्णिहि सरलं धृतौ विमलमतिधृतौ[105] गुरुपदं कृतौ[106] कनकलताऽभिकृतौ समकम्॥

॥ ७ ॥ मालिनी नौ म्यौ यश्च ॥ १३ ॥

नौ द्वौ मो यो च द्वौ मालिनी। चकारात् पूर्वयरयनुकर्षः—

परकपटमयानामर्थवत्सु स्थितानां[107]
मदुदगुणशतानामन्वगैः सन्नतानाम्।
न हि गुणलयनीत्याम्नुव्यमन्य[108]द्बुधना—
मितिविदपि वृणीते[109] पण्डितो मालिनीस्ता[110]॥

नान्दीमुखीति[111] भरतः। एषैव[112] शक्वर्यां करिमकरभुजा[113] स्यादन्तिमं ग विना[114]। अपि च। नो जौ द्वौ मरौ[115] चारविन्दम्—

भवतु[116] सुखं युवते सपदम सकर्णिकं[117]
भ्रमरनिपान-[ 88 ]-पदं सदा[118] विकचं श्रिया[119]।
न तदरविन्दसमं तथाऽपि मनं यतो[120]
जलदद्वसंगपदं सजालदश[121] सदा॥

(94) M : मणिगणनिकरो (95) A omits चेत् (96) A अन्द सप्त च यतिस्थानश्चेत्; M adds च (97) M drops गुण° (98) M : कृतरणरणिक। (99) M °दनयति, S °शदयति (100) A सुनयशः (101) A : कुसुमजरुचिरिव, M : कुसुमितरुचिमिव (102) A : मणिगुणनिकरा; M मणिगणनिकरम् (103) M & S add a name here : चित्रा च। (104) A omits : गायत्र्यां वृत्तम् (105) A : विमलमति.। अतिधृतौ (106) M प्रकृतौ (107) M : मरकपटमय्यूनां पूर्वतनुस्थितानां (108) A : गुगलयनीत्यस्नुव्य° M : गणनयनीकस्तुव्य°, S गुगलयनीचाम्नुव्य° (109) M : इदमन-वृणते; S : इति वदति वृणीत (110) A पण्डिता° M मण्डिता° S मण्डनमालिन्दन्या (111) A : नान्दिमुखोभि°; M : नन्दीमुखमिति (112) M : एष्वेव (113) A : हरिमकरविना (114) A drops after स्यात्; M : स्याद्वत्तमंग विना; S : स्यादन्तिमं गं विना (115) A नौ द्वौ भरौ (116) M : भवति (117) A : मध्दमकर्णिकं (118) A & M drop सदा (119) A : भिया (120) तथापि मतमतये; M : तथा विष्णयतो, S : तथाऽभिमत यतो (121) A : जलदद्वसंगपदा समानदशा; S : जलदद्वसंगपदं समानदशं

इदमेव तृतीयचतुर्थयोर्व्यत्यासात्[122] प्रमद्रकम्[123]। रभौ भौ च[124] द्वौ ररच सुन्दरं वा रमणांशुकं[125] वा मणिभूषणम् वा—

सुन्दरं वदति धारयते रमणांशुकं
दर्शनाय च करोति निजं मणिभूषणम्।[126]
एवमादि विधिना वनिता नयते[127] वशं
तत्र पण्डितजनो[128] न विमुह्यति[129] नापरः ॥

अथाष्टौ—

॥ ६ ॥ ऋषभगजविलसितं भ्रौ नौ न्गौ स्वरनवकौ ॥ १४ ॥

भरौ नास्त्रयो गुरुश्च ऋषभगजविलसितम्। सप्त नव च यतिः[130]—

पिङ्गलनागशास्त्रमिव गहनमृषिगतं[131]
धीर्मम मोक्षवर्त्म[132] कथमनुजिगमिषति।
युज्यत[133] एव वा तदनुविशति हि हरिणो[134]
काननमुद्धतागमृषभगजविलसितम् ॥[135]

अपि च। नौ जास्त्रयो रगौ च वाणिनी—

यदभिमतः[136] स्वयमेव विनश्यति स्मरोऽयं
विषयसुखानुभवेन[137] निरिन्धनो यथाऽग्निः।
न तदुचितं पुनरेव नवैर्हि[138] वाणिनीना-
मभिसरणैः[139] प्रभवत्ययमिन्धनैरिवाग्निः[140] ॥

इयमेव[141] सप्तमाष्टमयोर्लघुगुर्वोर्व्यत्यासात् केषाञ्चित् वाणिनीति[142] ॥

अथात्यष्टौ—

॥ ७ ॥ हरिणी न्सौ म्रौ स्लौ भवसमुद्रर्षयः ॥ १५ ॥

नसमरसलगा[143] हरिणी। षट्, चत्वारः सप्त च यतिः[144]—

विचरतु वने वन्यैर्जीवन्नसौ हरिणीसुतः[145]
भयतु यदि वा नाना सत्त्वैर्नवैर्हरिणी ध्रुवः[146]।

(122) M : तृतीयचतुर्थगणयो (123) A प्रवरकम् ; प्रभद्रकम् (124) M drops च (125) A : सुन्दररमणां शुकं (126) M drops मणि° (127) M : वनितां यते (128) M : मण्डितजनो (129) A : न मुह्यति (130) A : यतिस्थानम् (131) A : °गृतं (132) A : धिर्मम मोक्षवर्म ; M : धीर्मम परमवर्त्म (133) M : युज्यते (134) A : तनुविशति हरिणि ; S : तदु निविशति हरिणी (135) M : काननमुद्धतामृषभगज-विलसितम् ; S : काननमुर्गतागमृषभगजविलसितम् (136) A : यदभिमत ; M : यदपि मत (137) M : सज्जनसुखानुभवेन, S : विजनसुखानुभवेन (138) S : नवैश्च ; A : नवै (139) A : °मभिसरणे : (140) M omits the second half of the verse (141) M : इदमेव (142) A : वारिणीति ; M : वाणी (143) A : नसमरननगा (144) A : यतिस्थानम् (145) M : हरिणीसुतम् (146) A : हरिणीर्भुव ; M : हरिणीभुव

मदनहरिणीस्तन्वङ्गीर्वा[147] करोतु सखी:[148] स्त्रियः
सततमथ वा मुक्तिं याचे महाहरिणी हरेः[149] ॥

इह यदि लघवः षट् पूर्वं स्युः[150]स्तदा ललितं धृतौ। यदि च दशकाद्गोऽन्योऽपि सा धृतौ हरिणीपदम् ॥[151]

॥ ७ ॥ पृथ्वी ज्सौ ज्सौ य्लौ ग्वसुनवकौ[152] ॥ १६ ॥

जसौ द्विकौ यलगाश्च पृथ्वी। अष्टौ नव च यतिः[153]—
नृपोऽपि शयने क्वचित् [ 89 ] स्वपिति तण्डुलप्रस्थभुक्
परोऽपि भ्रमने सदा फलमिदं कयश्चिज्जनः।
पृथ्वैव[154] मनुते नृपः सहजलाशयैः सप्तभिः
वधूमिव कुलोद्भवामनुभवामि[155] पृथ्वीमिति ॥

॥ ७ ॥ वंशपत्त्रपतितं भ्रौ न्मौ न्लौ ग्दिग्स्वयः ॥ १७ ॥

भरनभनलगा वंशपत्त्रपतितम्। दश सप्त च यतिः[156]—
सरुभु सतत्त्वबुद्धिरुदिता मन उपशमनी
मृदुमदादिकेषु[157] यदि सा बहु मुखरयति[158]।
आत्ममणिष्वविनियमिदं[159] जगदपि विशति
दमाचित[160]वंशपत्त्रपतितं कृशमपि[161] नदति[162] ॥

॥ ७ ॥ मन्दाक्रान्ता म्भौ न्तौ तगौ ग् समुद्रर्तुस्वराः ॥ १८ ॥

मभनास्तौ च[163] द्वौ गौ च मन्दाक्रान्ता। चत्वारः षट् सप्त च[164] यतिः[165]—
अत्याक्रामेत् सुजनशतकं वल्लभां स्वामिव स्त्री[166]
मन्दाक्रान्ता न हि रसकरी शोभनाप्रोञ्छुयष्टिः।

(147) A : °स्तदङ्गीर्वा (148) A : सखी ; M & S : सुखी (149) M : मदनमरं चाप्यसं या चं महाहरिणी हरे ; S : सततमथ च मुक्त्यं याचे महाहरिणो हरे (150) M : सा (151) A : यदिह दशकाद्गोऽन्यो हि स्या तदा धृतौ हरिणापदम्। हरिण हरितवर्ग। M : यदि च दर्शनात् गोन्योपि सा धृतो हरि त्रिपदम्। S : यदि च दशमाद्गोऽन्यो धृतौ हरिणीपद नाम वृत्तम। (152) A : °मुनवकम् (153) A : अष्टौ नव च यतिस्थानम् ; M : अष्टनवकौ च यतिस्थानम् (154) A : वृथेव (155) A : कुलोद्भवामि (haplology) (156) A & M : यतिस्थानम् (157) A : मृदु हिदिकेषु (158) A : बहुशु वरयति (159) M : °मणीष्वविक्रयमिदं ; A : °मणिष्वतिक्रियमिद (160) M : चित्रित (161) M : भृशमपि ; S : कृशमपि (162) A : न दहति (163) A omits च (164) M : चत्वार सप्त षट् च (165) A & M : यतिस्थानम् (166) A : अत्याक्रामेत् सुजनशतकं वल्लभां स्वमिव स्त्री। M : अत्याक्रामेत्सुजनसदृशं वल्लभ स्वामिवस्त्रम् ; S : अत्याक्रामेत् सुजनसुदृशं वल्लभं स्वामवस्त्री

नैवाक्रामेत् खलपरिषदं वाग्गुरुत्यामिव दृष्टो
मन्दाक्रान्ताऽप्युरगवनिता मुञ्चत्येव भीत्यै ॥

अस्त्यामेषा मदनललिता तसौ[167] चेद्रसकाद् । माराक्रान्ता भवति दशकादश तगणौ गुरु च कुर्यात्[168] ।
षड् चेल्लघव इह तदा स्याद्भौ चन्द्रलेखा ॥

॥ ७ ॥ शिखरिणी य्मौ न्सौ भ्लौ गरुद्राः ॥ १९ ॥

यमनसभलगाः शिखरिणी । षडेकादश च[169] यतिः[170]—

अपत्यं वा भव्यं द्रविणमथ[171] वा स्वादुपचितं
वधूर्वा पार्श्वस्थो[172] यदि वसतु गेहेऽपि पुरतः[173] ।
न चेत् सर्वं हित्वा[174] व्रजतु[175] वनमुग्राय तपसे
कथं भुङ्क्ते नाज्यं न दधि न च मुग्धो शिखरिणीम्[176] ॥

भृतौ नु क्रोडेयं यदि तसगणौ द्वौ द्वादशात्[177] ।

अपि च ।[178] नजभा जौ द्वौ लगौ च[179] नर्कुटकम्[180]—

निवसतु [90] नाम वेश्मनि कथञ्चिदयं पुरुषो
यदि रतिमूलयौवनवती[181] वनिताऽस्ति गृहे ।
अथ तु न सा न तद्गृहमवेहि गृहाह्वयकं[182]
न रसतु सुखं सुखाह्वयवदं गगनर्कुटकम्[183] ॥

यतिरिह सप्त षड् जलधिना यदि कोकिलकम्[184] ॥ अथ भृगौ—

॥ ७ ॥ कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रियर्तुस्वराः ॥ २० ॥

मतना यायच[185] यथः कुसुमितलतावेल्लिता । पञ्च षट् सप्त च यतिः[186]—

एषा प्राक् तावत्[187] कुसुमितलतावेल्लिता चञ्चरीकै-
रन्यां मानघ्नः पुनरपि कदाचिद्यन्त्येव भृङ्गान्[188] ।

(167) A : स्यात् म्नौ ; M : न्सौ (168) A . दशकादश तगणौ गुरु कुर्यात् ; M : दशकादश मगणौ गुरु कुर्यात् ; S : दशमादश. (169) M : षट् च एकादश च (170) A & M : यतिस्थानम् (171) A : द्रविणमथ ; S . द्रविणमथो (172) A : पार्श्वे (173) A : गेहे नु पुरतः ; M : गेहे विपुरतः (174) A : त्यक्त्वा (175) M : विशतु S : व्रजतु (176) A : भुङ्क्ते नाज्यं न दधि च मुग्धा शिखरिणी ; (177) A : द्वादशान्ते ; M : द्वादशानौ (178) M drops अपि च (179) A drops च (180) M : नर्कुटकम् (181) A : युवमौवना (182) A : अथ तु न सा तु तद्गृहमवेहि गृहाह्वयकं ; M : अथ नहि न तद्गृहम-वेति गृहाभिधकम् ; S : अथ तु न सा न तु गृहमवेहि गृहाह्वयकं (183) M : नर्कुटकम् (184) A reads : इहैव सप्तसु षट्सु चतुर्षु च यतिश्चेत् कोकिलकम् ; M : कोकिलम् (185) M drops च (186) A & M : यतिस्थानम् (187) M : एषा प्राक् तावत् (188) A : कदाचिदर्थयन्ति भृङ्गान् ; M : कदाचिदर्थयन्त्येव भृङ्गान् ; S : कदाचिद्यन्त्येव भृङ्गान्

एता[189] गन्धार्यै दिशि दिशि भृशं लोलयन्ति प्रवाता[190]
नूनं मन्यत्वं चपलमनसां सन्निधौ[191] दुःखहेतुः ॥

इहान्योऽ[192]न्त्यादौ चेल्लघुरतिधृतौ मेघविस्फूर्जितं[193] स्याद्रम्भा वा सुवृत्ता वा। षट् चेत् पञ्चम्या लघव इह तदा पुष्पदामातिधृत्याम्। मकारौ द्वावेतौ[194] यदि युगपदमु[195] विद्धि शोभा[196] कृतिस्याम्। अपि च। नसौ[197] मौ द्वौ यौ चानङ्गलेखा—

जड्[198]जन हृदि प्रागेवासक्तां[199] हारिभिर्मानिभेदै-
रिचरपरिचिता न्यस्यत्येषोर्व्यामङ्गनाऽनङ्गलेखाम्[200]।
पुनरपि च तां निष्पीतां कृत्वा[201] मन्मथं वर्णयन्त[202]
कठिनहृदयाः[203] कानेने लोकान् काव्यकारा[204] व्रजन्ति ॥

षट् पञ्च सप्त च यतिः[205]। अथातिधृतौ[206]—

॥ ७ ॥ शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यर्पयः ॥ २१ ॥

मसजसाः तौ द्वौ गश्च शार्दूलविक्रीडितम्। द्वादश सप्त च यतिः[207]—

मन्ये धन्यजनस्य कौशलमिदं यन्मर्मभ्रंसयन्[208]
कृत्वा स्निग्धविदग्धविभ्रमरसश्लाघ्याः[209] सखीर्वाग्मिनीः[210]।
वैदग्ध्यं मकरध्वजस्य[211] भजते[212] हर्म्यस्थलेऽभ्रंलिहे
शैले[213] वा मृगशीलमिच्छति विना[214] शार्दूलविक्रीडितम् ॥

इदमेव कृतौ[215] यदि लोऽन्यो[216] वीतगो[217] मुखगो लघुश्च[218] मुखजो मत्तेभविक्रीडितम्[219]।

[91] अपि च। ज्सौ भ्रिशो[220] गश्च रतिलीला[221]—

यदा खलजनो[222] गदोद्यतकरं[223] निशामयति[224] मृत्युं
मतश्च नरकं विकर्मजफलं[225] विपत्तिशतशाली[226]।

(189) M : एतान् (190) A : प्रवाता M : पुरा ता (191) A : चपलजनतासन्निधौ ; S : चपलमन' सन्निधौ (192) M : drops अन्यो (193) A : मेघविस्फूर्जता ; M मेघविस्फाजितं (194) M : मकरणाद्विती (195) A : पदमु', M : युगपदिमौ, S : यद्यमु (196) A : शोना (197) M : नौ (198) M : जड़° (199) M : प्रागेवा सक्ता (200) A : °चिरदिरवाता न्यस्येरयेषोर्वीमङ्गनानङ्गलेखाम् ; M : °रिचरपरिचिता न्यस्यत्यैषोर्वीमङ्गना)ङ्गलेखाम् (201) A : निष्पताकं तु ; M : निष्पन्नाकृत्या ; S : निष्पन्नाकृत्वा (202) A & S : वर्धयन्त (203) A कठिणहृदया (204) A : लकाव्लिका ; M : लोकान् काव्यकारान् (205) A & M : यतिस्थान' (206) M : अथातिधृत्याम् (207) A & M : यतिस्थान' (208) M : वृद्धाधविव्रसि यत्; S : यद्वाघमघ्वसयद् (209) A श्लाघ्या ; M : श्लाघ्या (210) A : सखी वाग्मिन (211) M : मकरध्वजाय (212) M : भजते ; S : भवति (213) M : चेते (214) A : मृगशीलमिच्छथिना (215) A : इदमवकृतौ (216) A : विनो)न्या ; M : तो)न्यो (217) A drops the word ; M : विनतो, S विलगो (218) M लिवश्च ; S : लवश्च (219) A : मत्तेभविक्रीतम् (220) M : अपि चाभौ न् सौ ; S : अपि च। जभौ तृणौ (221) A : गश्चातिलीला ; M : गश्चरती लीला ; S : गश्च ते लीला (222) A : खलुजनो (223) M : गद्दोद्यभक्रं (224) M : विलोकयति (225) A : परश्च नरके)पि कर्मजफल ; M : गतं च न के विकर्मफलज (226) A : विपत्तिशतशालि

तदाऽशनमपि त्यजेदतिभयाज्जनः[227] किमुत देयां[228]
परस्य महतो जनस्य वनितास्वनित्यरतिलोलम् ॥

अथ कृतौ[229]—

॥ ७ ॥ कृतिः ॥ २२ ॥

कृतिरित्यधिक्रियते[230] । [231]कृतिग्रहणमुत्तरार्थम् । वक्ष्यते[232] ग्लिति वृत्तमिति (7/24) तत्र विंशतेरक्षराणां ग्रहणार्थम्[233] । अत्र पूर्वापरपादार्धवशात्[234] संख्यानियमो नाश्रीयत इत्युक्तम् ॥

॥ ७ ॥ सुवदना म्रौ भ्नौ यभौ ल्गौ स्वरर्षिरसाः ॥ २३ ॥

मरभनयभलगाः सुवदना । द्वौ सप्तकौ षट्कश्च यतिः[235]—

न्यस्तार्थेषूत्तमा धीर्गुरुषु[236] लघुषु वा तिष्ठत्यनलसा[237]
तिष्ठन्त्येवाप्रपादे[238] शिरसि च लसिता[239]न्यस्ता [240]सुमनसः ।
शक्यं वा दुष्करं वा तनुरपि कुरुते[241] कार्यं गुणवती[242]
स्वामित्वं[243] प्रेष्यतां वा [244]भजति वरवधूर्भर्तुः[245] सुवदना ॥

॥ ७ ॥ ग्लिति वृत्तम् ॥ २४ ॥

गुरुर्लघुर्गुरुर्लघुरित्यावृत्त्या[246] वृत्तं नाम वृत्तम्—

मृदङ्गनृत्यशिल्पतल्परम्यहर्म्यमावसाय[247] वा तपस्य
नव्यगव्यशालिशालिभक्तभुक्तिमाचराय[248] वा तपस्य ।
कामकालकान्तकार्यकारि[249]कामिनीं भजाय वा तपस्य[250]
वित्तममत्तमुत्तमं[251] समाजयाय[252] वाऽऽर्यवृत्तमेव ॥

(227) M : त्यजेदपि भजानक (228) A : किमपूर्व्यं ; M : किमु दहे या (229) M reads *sūtras* 22 & 23 together as a single *sūtra*. (230) A drops this sentence. M adds after this the *vṛtti* on *suvadanā* and then continues the *bhāṣya* on *kṛtiḥ* (231) A adds अत्र here. (232) A & S : वक्ष्यति (233) M : ग्रहणार्थः (234) A : °परार्थवशात् ; S : पूर्वार्धार्धवशात् (235) A & M : यतिस्थानम् (236) A : न्यस्तार्थेषूत्तमाधी° ; M : दत्तार्थेषूत्तमाधि (237) M : तिष्ठत्यानलसा ; S : तिष्ठत्यलसया (238) M : तिष्ठन्त्येवाभवादे (239) A : कुपिता ; M : लषिता ; S : लभिता (240) A & M : न्यस्ता (241) M : तदनु नाकुरुते ; S : तनुरपिकुरुते (242) A & M : गुणवति (243) M : प्राधान्यं ; S : स्वाधर्म्यं (244) A drops वा (245) A : परवधूर्भर्तुः ; M : वरवधूदत्तं ; S : वरवधूदानुं (246) A : इत्यावृत्या , M adds वृत्त्यावृत्तौ (247) A : °मावसाद ; M : °मावभाय (248) A : नव्यगव्यशालिभक्तभुक्तिमाचराद ; M : माचराध (249) M : °कार्यकार्य ; S : कार्यकार (250) A : भजा धवतपस्य ; M : भजात्यथा तपस्य (251) M : वित्तममत्त उत्तमं (252) M : समो ज्याय ; S : समाजयेत

अपि च। नो मौ द्वौ मः सौ[253] लगौ चोज्ज्वलं[254] मुद्रा वा—

प्रकृतयस्त्रिगुणा[255] महदाद्याः सप्त तथा[256] गुणसंहति-
विकृतयोऽपि च[257] षोडश तासां चेतयिता दृशिरुज्ज्वल-[258]।
विकृतयोऽवयवाश्च यदीया[259] सर्वं इमे तमिम[260] हरिं
विदुरिति श्रुतिनिर्णय[261] [ 92 ]-मुद्रावशप्रसंकथित[262] पदम् ॥

एकादश नव च यतिः[263]। अथ प्रकृतौ—

॥ ७ ॥ स्रग्धरा म्रौ भ्नौ यौ यस्त्रिसप्तकाः ॥ २५ ॥

मरभना यारच त्रयः[264] स्रग्धरा। त्रयः सप्तका यतिः[265]—

पश्यन्तीमे वधूनां कृशतरमुदरं तासु मोघस्य[266] कार्यं[267]
व्यूढं[268] पश्यन्ति तासां स्तनघनजघनं देहदुःखं प्रवृद्धम्[269]।
भ्रूभङ्गापाङ्गदृष्टिस्मितभुजविकृतीर्विभ्रमानातुरासां[270]
न स्वप्नावाप्तलक्ष्मी[271]तरलतरवधू[272]स्रग्धरावस्त्रभोगान्[273] ॥

अन्त्यः पञ्चवर्णा लघव इह[274] चेच्चित्रमाला कृतौ स्यात्। प्रथमादन्यो[275] लघुश्च प्रथम इह महा-स्रग्धरेत्याकृतौ स्यात्। लघुयुग्मं वान्यद्यदि[276] स्यात् प्रथम इह[277] तदा स्यात् पताका विकृत्याम्[278]।

अपि च। नजभा जास्त्रयो रश्च सिद्धिका वा[279] चित्रलता वा शशिवदना वा रुचिरा वा—

अफलयुता[280] पुरी भवति[281]न स्वटवी[282] सुफलार्थसिद्धिका[283]
स्त्रियमपि निन्द्य[284]पुष्पबहुला न तु चित्रलतां सुपुष्पिताम्[285]।
शशिवदना वधूरिति च यन्मनुते तदपीष्यते शुभा
यत उरुचन्द्रकान्तमुखरागशुभा[286] रुचिरा वनस्थली ॥

(253) M adds : द्वौ (254) M लगोज्ज्वलं (255) A प्रकृतं यस्त्रिगुणा (256) A drops तथा (257) A drops च (258) A ते दयिता दृशोहज्ज्वल ; M चेतयि तादृशिरुज्ज्वल , S : चेतदिता दृशिरुज्ज्वलं (259) M : विकृतावयवश्च सदीया (260) M तदिम (261) M श्रुतिनीरस° (262) A : मुद्रार्थकथित ; M मुद्राय संकथितं ; S : मुद्रात्रिम्ययमकरित (263) A : यतिस्थानम् ; M reads : एकादशसु नवसु च यतिः (264) A : त्रयो य (265) A : यतिस्थानानि (266) A भागुभोऽस्य (267) M : कार्यं (268) M : वृद्धं ; S : वृद्ध (269) M नेह दुःखस्य वृद्धिम् (270) M भ्रूभङ्गापाङ्गदृष्टिस्मितभुजविकृतिर्विभ्रमानां तुरसाम् (271-72) M : स्वपत्नवर्जिता (273) M °भोगा ; S : °भोगाते (274) M drops the lines following this, due to haplology and begins after n. 277 (275) A : प्रथम्योऽन्यो (276) A : वाऽन्यदन्यदि ; S वाभिन्यपि (278) A : अवकृत्याम् ; M अभिकृत्याम् (279) A drops वा (280) M : अफलतां ; S : अफलयता (281) M : परिभवति (282) A : वनटवी ; M वटवी (283) A : सुफलार्थसिद्धि (284) M & S : निन्द्य (285) A : सुपुष्पिका (286) M °मुखमशुभा ; S : मुखरागशोभा

अत्रैव तृतीयगणस्य षष्ठस्य[287] च विपर्यासे वनमञ्जरी[288]। इहैव यदि लघुरन्तिमोऽपि न्लगारचोद्-कृतौ[289] सुधाकलशः। चतुर्दश द्वादश च यतिः॥

अथाकृतौ[290]—

॥ ७ ॥ मद्रकं भ्रौ न्रौ न्रौ न्गौ दिगादित्याः ॥ २६ ॥

भरौ नरौ द्विरौ नगौ च मद्रकम्[291]। दश द्वादश[292] च यतिः[293]—

पद्मभून्[294]र्न्यम्बुर्निर्मिहाह[295]तटिमेरचितं वसतये[296]
चन्दनमवदना[297]स्तनुग्रहाः स्रजः सुवसनानि[298] चाङ्गचये।
प्राणसमा समन्वितगुणा समाङ्गरचिता वधूश्च रतये[299]
स्याद्यदि किन्तु[300] मद्रकमयं पुमान् वहति किन्तु चञ्चलमिदम्॥

मद्रक[301]शब्दो गीतिविशेषे[302] हर्षे च। अपि च। मौ द्वौ रः सारचत्वारो गुरुश्चकर्णगति[303]—

स्वप्नगतेन[304] जनेन साधितराज्यफलं न फलं[305] यदुदत्वा-
देवमिहापि सुखं[306] शुभं न [93] मनं विषयेषु मतं[307] क्षयिकत्वात्।
यच्च[308]जनः स्थिरमेव[309] किञ्चन[310] वस्तु सुखं मनुते मतिमन्द-
स्तस्य च विच्युतिरस्ति नैव विभाव्यत सुरगतिर्दिवि[311] यद्वत्॥

अथ विकृतौ—

॥ ७ ॥ अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ रुद्रादित्याः ॥ २७ ॥

नजौ भजौ द्विरौ भलगाश्चाश्वललितम्। एकादश द्वादश च यतिः[312]—

नव दश[313] वाऽस्य वाऽपि शुभदा भजन्तु दशना[314]न सप्तदशनाः
श्रवणयुगं प्रलम्बि शुभदं गलश्च[315] मणिलः[316] स्पृशन्ति च[317] गजे।
शुभमलिकं[318] ललामरुचिरं[319] पराश्वललितक्रमश्च गमनं
तत इह लक्षणं[320] यद्यपि च[321] स्थितं न नृपु ते च[322] केवलं[323] गुणाः[324]॥

(287) A drops षष्ठस्य (288) A अनगाद्य यथामृत उत्कृतौ : लघु : M : अटष्ठस्य यत्रा उत्कृतौ (289) M : विपर्यासेन मञ्जरी (290) A & M : मद्रकं (291) A : च मुद्रकं ; M : मद्रकं (292) M drops द्वादश च (293) A : यतिस्थानम् (294) A : पद्मसभ ; M : पद्मकृम (295) M : °विमार्ग° (296) A : °हित वसतये ; M : °वातं वम्सतेव ; S : °वसतवसतव (297) A : चन्दगुमण्डना ; M : तनुरहमण्डना (298) A : भ्रमणाय सवः सुरव- नानि ; M : भम एवस्रजः सुवसनानि (299) A : रजन् दे (300) A : स्याद्यदि भिन्न° ; M : स्याद्यदि किन्ति (301) M : मद्रक° (302) A : गीतिभेदे ; S : गीतिवेदे (303) A : क… गति ; M : वर्णगति ; S : कर्णगीति (304) A : स्वप्ने गतेन (305) A : साधितराज्यकलं फलं (306) A : सुख ; S : सुखं (307) A : मवत° (308) M : क्षयिकत्वाच्च without the *ardhacchedas.* (309) A : जनास्थिरमेव ; M : जनस्थिरमेव (310) A & M : किं च न (311) A : सुरगति (312) A : यतिस्थानम् ; M : एकादशे द्वादशे (313) M : नव दशदश दश (314) A : दर्शना (315) A : गरश्च ; S : गरश्च (316) M & S : मणल (317) A : स्पृशति च ; M : स्पृशति च (318) A : शुभमलिकं (319) A : ललाम रुचिर (320) A : लक्षण (321) M & S drop च (322) M : ते न ; S : तारच (323) M : वरचन (324) M : गुण

॥ ७ ॥ मत्ताक्रीडा मौ त्लौ[325] नौ[326] न्लौ[327] वसुपञ्चदशकौ ॥ २८ ॥

मौ द्वौ तो[328] नाश्चत्वारो लगौ[329] मत्ताक्रीडा । अष्टौ पञ्चदश[330] च यतिः[331] । अष्टावष्ट[332] सप्त चेत्यन्ये[333]—

तन्त्रीमिश्रं गीतं रामा विदधति निशि निशि कतिपयसमयं[334]
नृत्यत्यन्या[335] तन्वी[336] वल्गन्मणिततितडिदिव[337] कतिपयसमयम् ।
अन्या मत्ता क्रीडादक्षा[338] रमयति रतिरिव कतिपयसमयं
धन्यः कोऽस्मादित्यौत्सुक्यं विषयिषु विजहिहि विषमिव विषयान्[339] ॥

अपि च । तो जाः षट् लघुर्गुरुश्च शङ्खः—

यद्यप्यमरोऽ[340]मृतपानवशादुपयाति तथाऽपि पुमान् मरणं
यद्यप्यबला सुरलोकभवा कुशरीरमथाऽपि विनिन्द्यतमम्[341] ।
यद्यप्यरुजा मनुजाश्च जिताः[342] परलोकसुखाय तथाऽपि न ते[343]
शङ्खोऽपि निधिर्यदि नाम वशो[344] भवति क्षुदथाऽपि[345] नृणां समये ॥

एकादशसु च यतिः[346] । पुर इह नो यदि हंसगति[347]स्तरणीदयितश्च[348] महत्यपरम्[349] ॥

अथ संकृतौ[350]—

॥ ७ ॥ तन्वी भ्तौ न्सौ भौ न्यौ द्विरादित्याः ॥ २९ ॥

[94] भतनसा भौ द्वौ नयौ च[351] तन्वी । द्वौ द्वादशकौ यतिस्थानम् । पञ्च सप्त द्विपदृकेत्यन्ये[352]—

सद्धितवाणी[353] विदुरतिमधुरां[354] स्वादुरसामिव रसगुणयोगात्
सा[355] शुभमर्थं निवहति बहुलं श्रीरिव वारिधि[356] पयसि विशाला ।
वर्णविशेषैः कृतशुभरचना चित्रवधूरिव समभुवि तन्वी
क्वापि च तत्त्वं[357]विमृशति यदि सा सर्वजनैरपि भवति निषेव्या ॥

(325) M मौ (326) M drops नौ (327) M : न्लौ (328) A तौ, M : लाश (329) M adds च ; S adds ■ (330) A : पञ्चदशक (331) A & M : यतिस्थानम् (332) A अष्टावष्टौ, M : अष्टकौ द्वौ (333) A : सप्त चेति वा, M : सप्तकश्चेत्यन्ये (334) A : तन्त्रीमिश्रं मीनं कामी विदधति निमिशि कतिपयदिवसं ; M : श्राव्य गीतं बाला रामा · ··· ; S : तन्तु मिश्रं गीतं बामा विहरति निशि दिशि··· ··· (335) M : नृत्यन्त्यन्या (336) A : तद्धि ■ : तर्हि (337) A वल्गमणिततटिद्गत; S : वल्गमणितततटिनिव (338) M अन्या मत्ता ह्या (339) M : विषयान् (340) M : यद्यमरो (341) M : विनिन्द्यमतम् (342) M मनुजाश्च मिता (343) M : परलोकशुभाय न ते ; S परलोकशुभाय भवति न ते (344) M : वशो (345) A : क्षुदथापि ; M : सुतथापि (346) A : एकादश द्वादश च यतिस्थानम् (347) A : हेस··· · ति (348) M : दयितश्च (349) A : समत्वपरम् ; M : समश्चपरं ; S महं तपरम् (350) M : सङ्कृतौ (351) M drops च (352) A : षट् चेत्यन्ये (353) A : सदितादिवाणी ; S सद्धिनवाणी (354) A : विरहति मधुरा॰ (355) M drops सा ; S : वाशुभमर्थं (356) A नारी यतो यदि (357) A : तद्धि ; S तद्धि

॥ ७ ॥ भुजङ्गविजृम्भितं मो लो नो सौ लगौ[398] वसुरुद्रर्षयः ॥ ३१ ॥

मौ द्वौ तो नास्त्रयो रसलगाश्च[399] भुजङ्गविजृम्भितम्। अष्टावेकादश सप्त च यतिः[400]—

[95] जन्नादग्रे[401] क्रोधव्याधि व्यसनदुरितशतशरणं[402] शरीरविशोषणं[403]
कृत्याकृत्यज्ञानास्थानं[404] निरवधि[405] परिभवविधिना कृतार्थमहर्निशम्।
दूरे जह्यात् क्रोधाविष्टं[406] भ्रुकुटि[407]कुटिलविकृत[408]मुखं विलोहित[409]लोचनं
जह्याद्रोपश्वासप्रोष[410]प्रकटितपृथुफणिफणकं[411] भुजङ्गविजृम्भितम्॥

॥ ८ ॥ अपवाहं म्नौ नौ नौ न्सौ गौ नवर्तुरसेन्द्रियाणि ॥ ३२ ॥

मो नाः षट् सो[412]गौ च द्वावपवाहम्। नव[413] षट्कौ द्वौ पञ्च[414] च यतिः[415]—

कान्तारेषु तटभुवि[416]विटपिषु[417] रिपुषु पटुषु सखिषु कनके[418] लोष्टे[419]
निन्दायां स्तवनवचसि सुख उदयति[420] बहुविपदि च[421] समदृष्टिः सन्।
आत्मानं परमभजनमजरममरममयमगुणम[422]भिसन्ध्याय[423]-
न्निर्वाणं भजति[424] परममय[425] गमयति[426] भवजल[427]निधिमपवाहञ्च॥

अपि च। ना अष्टौ गौ च द्वौ वनलतिका[428]। अष्टकौ द्वौ[429] दशकश्च यतिः[430]—

इति किल वृषविधिघनविधिरति[431]विधिभवनिरसन[432] विषयोऽमी
क्रमश इह जगति बहुविभवशतमलघु[433]पशमयितुमुक्ताः।
क्षणमपि यदि जन इह कृतमति[434]रयमथ भवति फलवती[435] वाग्-
निलयनपदकुह वनगततरुरिव बहुफलवनलतिकानाम्[436]॥

(398) A does not read the गण्s (lacuna); M मौ मतौ° (399) M : रनलगाश्च (400) A : यतिस्थानम् (401) S जन्माद्ग्रे (402) A: व्यसने; M : किलकरमघशतं ; S : वलनकरिणशतशारणं (403) A : विशृम्भणं ; M : विशेषणं (404) A : कृत्याकृत्याज्ञानस्थानं , M : कृत्याकृत्यज्ञानस्थानं (405) A : परवध (406) M : भृकुटि (407) A : °कुटिल (408) M : °विकट ; S . °विकर (409) A : विरुक्ष° (410) A रोष तु श्वासेनैव प्रोषत् , M द्रोषश्वासप्रोष...... ; S : रोषश्वासेन प्रोषत् (411) A पृथुफणफलकं 412) A & M सौ (413) A अपवाहक । नवक , M अपवाहक नव (414) A : पञ्चकश्च (415) A : यतिस्थानानि (416) A कभुवि ; M कठभुवि ; S : कटभुवि (417) A & M पटुषु ; S : विपटुषु (418) A : कनक ; M जनके (419) A : लोष्ट , M लोष्टे (420) A : स्तनवच सितमुदयति (421) M drops च (422) A निमजनिमजरममरमभयमगुणम् ; M & S नमजर्मुरमभयमगणम् (423) S : °मभिसन्धान (424) A व्रजति (425) M परमथ ; S परमध (426) M : गमयति (427) A भुव° (428) A द्वादशलतिका ; M द्वौ वनतिलका (429) A अष्टौ नगणा गुरू द्वौ (430) A : यतिस्थानानि (431) A repeats घनविधि thrice ; M : °रिति (432) A & S भवति रसन° (433) M reads अलं after उपशमयितुं (434) M कृतरति (435) A फलवति ; M : फलवती (436) M & S : वनतिलकानाम्

[437]एवमुत्कृतौ द्विगुणितं वृत्तम्। एवं छन्दःकर्मणि द्विगुणितकुसुमविचित्रकमन्येऽष्टौ[438] मृदुललितपदम्। पञ्चकौ द्वौ सप्त च[439] यतिश्चे[440]त्त्वरितपदं पञ्च द्वादश[441] च चेद्गुणधारा। सकृतौ कुसुमबाणः।

एवं गाथाश्चादिजातय उक्ताः[442]। सम्प्रति दण्डको नाम जातिः[443]—

॥ ७ ॥ दण्डको नौ रः ॥ ३३ ॥

नौ द्वौ रश्च[444] दण्डकाः[445]। रगणाश्च सप्तावराः स्युः। अन्यथाऽतिच्छन्दःकर्माद्विभक्तत्वाभावात्। तथा हि नौ द्वौ रश्च[446] त्रय इत्यतिच्छन्दःकर्मणि वितानमेव[447]। चत्वारश्चेद्यतौ निशा नाम वृत्तं तारका वा। पञ्च राश्चेद् [96] प्रकृतौ लोला[448] नाम। षट् चेत् संकृतौ भुजङ्गाख्य[449] नीलालकं मेघमाला[450] वा। एतस्मात् सप्त राः कार्याः। ते च यथाकामं[451] वर्धनीयाः[452]। वृद्धिश्चासहस्राक्षरा[453]दित्याचार्याः। त्रिकस्य तु गणस्य वृद्धौ[454] सहस्राक्षरत्वं नोपपद्यत इत्येकोनसहस्राक्षरास्ते[455]॥

॥ ७ ॥ प्रथमश्चण्डवृष्टिप्रपातः ॥ ३४ ॥

एषां रगणवृद्धया प्राप्तानां दण्डकानां प्रथमः सप्तभिरेव रैः कृत[457]श्चण्डवृष्टिप्रपातः[458]—

उपनिषदपि नेति नेतीति य[459] वाग्लोलं[460] वदत्यन्यधर्मान् परावृत्य[461]
भुवनगुरुगुरुं[462] विदुर्यं पुमांसो[463] जगत्सृष्टि[464]रक्षोपसंहारहेतुं[465] परम्।
अथपति[466] विहितदण्डकस्तं[467] विभुं सर्वभूतान्तरात्मानमीशं[468] चतुर्वर्गः
न हि किमपि फलं[469] विना तत्प्रसादान्न शस्यं[470] नवं चण्डवृष्टिप्रपातं[471] विना[472] ॥

॥ ७ ॥ अन्यत्र रातमाण्डव्याभ्याम् ॥ ३५ ॥

रातमाण्डव्याभ्यामा[473]चार्याभ्यां[474] विनाऽन्येषामाचार्याणां मतेन प्रथमश्चण्डवृष्टिप्रपातः[475]। तयोस्तु दण्डक एव ॥

(437) M drops the lines upto त्वरितपदं (438) A : °कमितयष्टौ (439) A : सप्तकश्च (440) A : यतिस्थानानि (441) M : च पञ्चदशसु (442) A : इत्युक्ता (443) A adds कथ्यते ; S : जातौ (444) A : रगणाश्च (445) A & S : दण्डक The lines between 446 & 451 are absent in A (447) M adds स्यात् (448) M : लौ लौ (449) M : मौलाप ; S : मौलाख्यं (450) M : मेघमालं (452) A : वर्धनया (453) A : °सहस्राक्षरादि° (454) A : गणस्यार्थे (455) A : सहस्राक्षरान्ता ; M & S सहस्राक्षरास्ता: (456) A does not recognise it as an independent सूत्र ; M : चण्डवृष्टिप्रपात: (457) A adds दण्डक (458) M : चण्डवृष्टिप्रपात: (459) A & S : यो ; M : [illegible] (460) M : वाग्लपित (461) M : वदत्यन्यधर्मो यथा कुर्विति ; S : वदत्यन्यधर्मात्परा कुर्वन्ति (462) M : भुवनगुरु ; S त्रिभुवनगुरु (463) A, M & S : पुमांसं (464) A : °सृष्टौ° (465) M हेतु (466) M & S : प्रणये (467) A : निहितमण्डकास्त ; M : निहितदण्डकास्तं (468) A : °त्मानमीशे ; M : °त्मानमेनं ; S : सर्वभूतान्तरात्मानमीशं (469) M drops फल (470) A : वाक्सहा (471) M : °प्रपातं (472) M drops विना (473) A : रातमाण्डव्याभ्याम् (474) A drops आचार्याभ्याम् (475) M : प्रपात

॥ ७ ॥ शेषः प्रचित इति ॥ ३६ ॥

चयवृष्टिप्रपातादन्यः[476] सर्वोऽपि दण्डकशेषः[477] प्रचित[478]संज्ञः। एषु केचित् क्रमादर्णा[479]र्णवादिसंज्ञा निवेशयन्ति। प्रचित इति मुनेर्मतो दण्डकः। चयवृष्टिप्रपाताधिकारोऽस्य[480] वृथा कृतः[481]। तत्र संज्ञाः क्रमादर्पिताः कैश्चिदर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः॥

इति भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिभाष्ये सप्तमोऽध्यायः॥

(476) M : °प्रपातादन्य (477) A दण्डक शेष ; S दण्डका शेषः (478) M प्रचितक° (479) M & [illegible] drop अर्ण (480) M : °प्रपातादकोरस्य ; S °प्रपाताधिकारस्य (481) A : वृथ्या ; M : वृथ्या कृता

# अथाष्टमोऽध्यायः

## [97] ॥ ८ ॥ अथासिद्ध[1]गाथा ॥ १ ॥

सिद्धं छन्दोलक्षणम्[2]। यत्पुनर[3]स्मिन् तन्त्रे पूर्वैः सूत्रै[4]र्वक्ष्यमाणैर्वा लक्ष्यैरसिद्धं[5] तद्गाथाख्यं[6] वेदितव्यम्। यतः खलु छन्दोवर्गो वर्णितः। योऽय[7]मनन्तरोक्तो वृत्तवर्गो[8], यश्चतुर्मात्रो जातिवर्गो यश्च शुद्धजातिवर्ग[9]स्तेषां त्रयाणां शेषजातयो[10] गाथासंज्ञया गृह्यन्ते। बहुत्वादप्रसिद्धत्वाच्च विशिष्य नोक्ताः।

तत्र वृत्तवर्गस्य त्रिधा[11] शेषजातिः[12]। दण्डकशेषजातिर्वि[13]षमशेषजाति[14]र्मात्राविषमशेष[15]जातिरिति। मात्रावर्णशेषजाति[16]श्चार्यावैतालीयादि[17]भेदेन भिन्ना[18]। शुद्धवर्णशेषजातिस्तु[19] या ऋचः पूर्वोक्त-लक्षणा[20] उत्कृतेरधिका द्रष्टव्याः[21]।

तत्र दण्डकशेषजातिः। आवृत्ते[22]र्यद्गणैश्छन्दो ज्ञाम्यो साऽधिकद्रुतकृतेः[23]। तद्दण्डकविधानाख्यं यद्येषा[24] रगणं विना॥ नगाभ्यां[25] नेष्यते[26] दण्डकः। रगणेन तु शेषजातिर्लभ्यते। पूर्वमेवोक्तत्वात्। तिसृभिर्यादिभिः पञ्चभिर्गणैः षड्भुजोपक्रमा[27] शेषजाति[28]र्दण्डका भवन्ति। केचिदत्र प्रचित[29]संज्ञां निवेशयन्ति।

तत्र[30] तावत् प्रथममिह मधुरं स्यात्। ततो येन वा सेन[31] वा तेन वा[32] ज्ञेन वा भेन वा शेष[33]जातो भवेद्दण्डकः[34]। नैकमेकापि[35] तेनापि वा स्याद्दण्ड[36]कोऽधम्। एवं येनापि[37] दण्डका[38] द्रष्टव्याः। एतमेव यगणदण्डकं केचिद्वाचकेन ह्याहुः।

(1) A : अथासुक्त ; there is no indication of the beginning of Chapter VIII in A (2) A & S omit the sentence (3) A omits यत्पुनः (4) A : पूर्वसूत्रै॰ (5) A : यदनुक्त (6) M : गाथाख्यं (7) A : ॰न्तरोक्तवृत्तवर्ग (8) A omits यश्चतुर्मात्रो जातिवर्गो (9) A : यश्च...च ...जातिवर्गः (10) A : शेषजातीया ; M : विशेषजातयो (11) M : त्रयो (12) M : विशेषजाति (13) M : दण्डकविशेषजाति ; S : दण्डकशेषजाति (14) M omits—lacuna-mark (15) M drops शेष (16) M : मात्राविशेषजातिश्च ; S : मात्राशेषजातिश्च (17) M : आर्यावैतालीयादिषु (18) M : भेदभिन्ना (19) M : शुद्धविशेषजातिस्तु ; S : शुद्धशेषजातिस्तु (20) A : पूर्वमनुक्तलक्षणाः ; S : पूर्वानुक्तलक्षणाः (21) A drops the portion between 20 & 21. (22) M : आवृत्तैः and omits between 23 & 28 and reads दण्डका भवन्ति ; S omits between 23 & 26 (24) A : यद्येषा (25) A : नगाभ्यां (27) A : षड्भुज...... पक्रमा ; S : षड्भुजोपक्रमा (29) M : प्रचितक॰ (30) A & M add मधुरेण (31) A : सेन (32) M omits तेन वा (33) M : शेष॰ (34) M & S : भवेद्दण्डको (35) A : नैकमेकेनापि ; M : नैकमे-नापि ; S : नैकमेकेनापि (36) A : वास्मिन् ; M : तेनापि वा स्यात् (37) A & M : एवमन्येऽपि S : एवमेनापि (38) M drops दण्डका:

एतैरेव पञ्चभिर्गणैः रगणेन च प्रथमौ नगणौ विना षड्दण्डकप्रकाराः।[39] तत्र संज्ञाश्चैताः[40] क्रमेण भवन्ति। यगणेन सिंहलीलः[41] रगणेन मत्तमातङ्गः[42] सगणेन कुसुदास्तरणं[43] तगणेन कामबाणो जगणेन मौक्तिकदाम[44] भगणेन भुजङ्गविलासः। एतैरेव[45] पञ्चलोपक्रमैः[46] षड्दण्डकप्रकाराः[47]। तत्र यगणेन सिंहविक्रान्तो रगणेन चण्डपालः[48]। शेषस्तु गाथैव।

[98] अत्र लघ्वन्तैर्गणैर्ये दण्डकास्तेषामन्ते[49] गुरुमेकं द्वौ वा कुर्वीत। अथ यदि समान्युत्कृतिमति-वर्तेत[50]सावशोकमञ्जरी[51] नाम दण्डकः[52] प्रमाणो[53] चेदनङ्गशेखर इति।[54]

अथ वितानशेषजातिलक्षणलक्षणात्मकैः[55] पादैरभिधीयते। तानि च सहस्राक्षरान्तानि। उत्कृतेरधिकं छन्दो दण्डकैश्च बहिष्कृतम्। शेषजातिर्वितानानां मालावृत्तापराभिधम्। मालावृत्तं शेषजातावुदन्वन्नगनभनगयति मत्ता[56]स्त्रयो नौ भयो[57]याः[58]। विषमशरशरगुणितनगणस्वराः[59] पुनरच जो[60] गुरुश्च चेत् सरस्वती। म्नौ[61] प्रथममिह गणावथ लघ्व यदा जगणाश्च[62] लगौ च[63]तदा कथिता विमला। द्विःस्युस्तमौ च मजौ सरश्च सावलघु[64]द्वितयप्रतिविरति[65]र्यदि तल्ललितं वृत्तम्। नगुरकौ यदि कृतौ चतुरथो पुनरपि द्वयमिदं[66] चतुरितोयम[67]पराजितवती[68]। त्रिःस्युस्तमौ लघु च सौ मो[69] नगौ गुरु च शैलद्वयग्रहशरनगैरिह यतिः[70] स्यादियमपि सुभद्रा। द्विःस्युस्तमौ लघु च ताश्च भयो नव च नाः सो गुरु[71] रत्नमाला विरतिमपि[72] मुनिशिखरि[73] वसुविषयशरविषयशर[74] विषयशिखरिषु[75] विदध्यात्। अत्रैव[76] यद्येकोनविंशमक्षरं लघु स्यादन्यच्च तदनन्तरं लघ्वेकं क्रियेत कुलिशधरा[77] नाम वृत्तं पञ्चपञ्चाशदक्षरम्। एषामेव परस्परं योगाद् विषमार्धसमानि द्रष्टव्यानि।

एष्वपि[78] छन्दःसु[79] प्रस्तारादयः प्रत्ययाः प्रक्रमन्ते एव[80]। तथापि गायत्र्याद्विष्वपाठात् साधुत्वं न सिद्धमिति गाथेति संगृह्यताम्[81]। समवृत्तान्यनन्तानि शेषजाताविति स्थितेः[82]। आनन्त्यमपि को वक्तुं विषमार्धसमेष्वलम्॥ इति वितानशेषजातिमाला[83]।

(39) A & M add भवन्ति (40) M & S add च लगौ च (41) M : सिंहलुलाकर ; S : सिंह (42) All the Mss read मत्तमातङ्गलीलाकर (43) M : मुत्रास्तरणं ; S कुसुमास्तरणं (44) A & M : मौक्तिकदामा (45) A adds षड्भिर्गणैः (46) A पञ्चलघुक्रमैः ; M : पञ्चनक्रमे (47) A & M add भवन्ति (48) A : चण्डवाल (49) M : मध्ये (50) A : समानि उत्कृतिमती वर्तते (51) A सा शोकमञ्जरी M : °तासौ वशोकमञ्जरी (52) A & M add स्यात् (53) A प्रमाणे (54) A adds दण्डक ;M adds दण्डकः (55) M जातिर्लक्षणात्मकैः (56) M drops मत्ता ; S मत्ता° (57) A : लयो (58) A adds यो ; M adds भयौ (59) M : नगणा शरा (60) M : मो (61) A स्नाभ्नौ, M मेन, S स्मौ (62) A drops च ; M commits haplology and reads later अथ सप्त यदा जगणास्तदा etc. (63) A : सघुगुरू ; S लगुरव (64) A : सत्रि उत्तवृद्विं° ;M & S : द्वि स्युस्तमौ (then haplology) सन्निजसलघुद्वि° (65) A & M add च (66) M : पुनरपि द्वियदे° (67) A यमपरजितवती, M : यमपरा (68) M-haplology and drops the letters (69) A : लघु च तसा; M स्तभा लघु च नगौ ; S : लघु च सभो नगौ (70) A : °गृहद्वाराणै हयति ; M : °गृहद्वारानैरिह यति ; S : गृहशरनगैरिह यति (71) A & M : गुरुरत्नमाला ; S : गुरत्नमाला (72) M : वमपि (after haplology on अपरां) (73) M : गिरिशिखरी (74) A adds विष (75) M विषयसि शिखनि ; S : विषमशरविषविषमशर.. .. (76) A : अत्र (77) M & S : कुलिशधारा (78) A : एषामपि ; S : अथापि (79) A drops the word ; S : छन्दसो (80) A : प्रक्रमन्ते व ; M : क्रमन्त एव (81) A : संगृ..... ताम् ; M : गृहीताः (82) M: स्थितिः (83) A : °जाति मालावृत्तानि ; S : जातिमालावृत्ता

अथ महाविषमशेषजातिः[84]। पादा[85]नामक्षराणां वा यत्रोनाधिकता क्वचित्।

तां [99] महाविषमां शेषजातिं मन्येत[86] तद्यथा ॥ —

समेति वंशस्थमुपेन्द्रवज्रया यदि क्वचित् सा खलु शेषजातिः[87]।

स्यादिन्द्रवंशा च तथैव[88] युक्ता तद्वृत्तयोः[89] सङ्गतिरिन्द्रवज्रया ॥

एषां चतुर्णां वृत्तानामन्योन्यसङ्कराच्चतुर्विंशतिश्च[90] द्वादश च[91] महाविषमसहार्धसमानि सम्पद्यन्ते[92]। द्विपदे कपदो काचित् त्रिपदी चापि[93]दृश्यते। गाथा दण्डकपादैस्तु षट्पदी चाप्यनुष्टुभि[94]। षट्पदा ऽनुष्टुबन्ता या[95] जातिगाथेति[96] सा मता[97]॥ एष[98] श्लोक[99] उदाहरणम्। जातिगाथायाः सर्वत्र यथायोगमर्धसमान्यपि द्रष्टव्यानि।

अथ शास्त्रान्तरोक्तानि कानिचिदर्धसमान्युच्यन्ते—सयुगश्च[100] नगौ च[101] विषमे[102] मद्रका[103] युजि चांशुमान्। नयुगसयुगगुरवो[104] विषमेऽर्धे[105] मौ मगणाश्च[106] समे सुमनः कलिका[107]। जरौ[108] द्विकौ मनोरमाऽ[109]समे पदे[110]जरौ तगौ[111]समे पादेऽपि[112] च। नौं मलाविति पदेऽ[113]युजि च[114]युग्मे स्तवकवती स्नौयुगगयुता[115]। मः सौ द्वौ मगुरू[116] गुरश्चाद्ये पादे स्याच्छ्लोक[117]प्रीतिर्मत्तमयूरं परमन्यत्[118]। मौ तलघू च गुरश्चाप्यसमे नमनया युजि विलसितलीला[119]॥ इति महाविषमशेषजातिः।[120]

अथ मात्राच्छन्दसां[121] शेषजातिः[122]। तत्रार्यासु तावत्—गीतेर्गणेषु[123] तृतीयो यदि पञ्चमात्र इह च तदा[124] ललिता[125]। सप्तम पर्वलघ्वौ[126] गीतिगये यदि वदन्ति[127] रिपुं छन्दः[128]। यस्या[129] गीतेर्लक्षणद्वितय[130]मिदं भवति भद्रिका च[131] सा स्यात्[132]। प्रथमेऽर्धे[133] च गीतेः[134] स्याच्चेद् द्वितीय-

(84) A drops जातिः ; M drops शेषः (85) M reads भद्रिकास्यपदानामक्षराणां (86) A & S : मन्यते (87) M drops शेष, and has a lacuna mark after जाति (88) A तथैक (89) M : तद्वृत्तयो ; S : तदितयो (90) M : च ते द्वे चत्वारिंशच्च S च ते चतुर्विंशच्च ; (91) M drops च (92) A drops the sentence (93) M : का च ; S : चाप (94) A षट्पदी स्यादनुष्टुभि; S : षट्पदी चाप्यनुष्टुभि (95) A : षट्पदानुष्टु . जाति ; M : षट्पदनुष्टुभि पर्यन्ता ; S षट्पदानुष्टुबन्तानां (96) M : जातिर्गाथेति (97) A : सम्मता (98) M adds एव (99) M & S add जातिगाथोदाहरणं (100) A : स; M सौ (101) A & M drop च (102) A M & S add : यदि पादे (103) A : देहयका ; M : भद्रय ; S : भद्रयरा (104) A . °सयुगयुर... .. ; S : सयुगगुरवे (105) A : विषमे ऽन्य° (106) A : मगणौ ; M : मौ मगुरु ; S : मौ गमगौ (107) A & M : सुमन (108) M drops जरौ (109) A : मनौ रमौ ; M : मनो रमे (110) A : पादे (111) A : जरिता गुरु ; M : जरतौ गुरु (112) A & M : पदे (113) A : नौं मगौ निति पदे; M : नौ मगौ नतिपदे ; S : नौं मगाविति पदे (114) A : युजि पदे युजि ; M drops च ; S : तु in place of च (115) A & M : नजयुग्मयुता ; S : नयुग्मगयुता (116) A drops मगुरू (117) M : श्लोक° (118) A : मत्तमयूरा परमन्त्ये ; M : मत्तमयूरीति मन्यन्मन्य; S : मत्तमयूरो परमन्त्यं (119) M : °लीलम् (120) M & S omit this sentence (121) A : महाच्छन्द-सां (122) M : विशेषजाति (123) A & M : गणः (124) A : पञ्चमात्राभिहा तदा ; M : पञ्चमात्रा महा तदा (125) M : ललितं (126) A : लघिम ; M : लघ्मा (127) A : यदि पदं तिति° (128) A : रिपुच्छन्दस्मात् ; M : रिपुच्छन्दस्मात् ; S : रिपुच्छन्दः (129) A & S : यस्य (130) M : द्वितीय° (131) A drops च , M : भद्रको ; S : भद्रका च (132) A M; & S omit स्यात् (133) S: प्रथमार्धे (134)
M

द्वयेन भवति गाथाऽसावपि[135]। द्वावन्यौ[136] चाऽसावुपपदमाला[137] गाथयाधिके[138] वै द्वैरद्गूढोऽयं श्लोकः।

[139]अथ वैतालीयादिषु—

पादेषु चतुर्षु सलघुगा
जगुरू[140] वाऽन्तगता यदा तदा।
मागधिका [100] स्याद् युजोर्द्वयो-[141]
मंर्मिश्रसमकमतो[142]ऽन्यसौ भवेत् ॥

या मागधिका[143]पदैः [144]कृता [145]विषमैः सा परिचमान्तिका[146]। मागधिकासमपादसमपदैर्भवति चतुर्भिरिहोपहासिनी[147]। षण्मात्रः पञ्चमात्रो वा[148] त्रिमात्रो वा गणः क्वचित्। यत्र स्याच्छेषजातिः सा[149] मात्रावर्गस्य तद्यथा ॥ गलितं शीर्षकं जयहं द्विपदीत्यादिजातयः। शास्त्रान्तरेषु बोद्धव्या बहुधा-दिह नोदिताः ॥ इति गाथाप्रकरणम्।

अथ[150] वितानमन्यदिति[151] सूचित[152] समवृत्तादीनामवगमनाय[153] षट्प्रत्ययाः प्रक्रमन्ते[154]। तदेष श्लोकः[155]—

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया।
संख्या चैवाध्वयोगश्च षडेते प्रत्ययाः स्मृताः[156] ॥

इति तत्रोक्ता[157]दीनां छन्दसां कृत्स्नानि समवृत्तानि[158] विवृक्षमाणाय शिशिरवा[159] प्रस्तारः[160] प्रस्तूयते—

॥ ८ ॥ द्विकौ ग्लौ ॥ २ ॥

अत्र गुरुं वक्रं लिखेत्। ऋजुं लघुम्। ग्लाविस्येकाक्षरस्य[161] छन्दसः प्रस्तारमनुवर्तते इयक्षरस्य[162] विधातुम्। तथा हि ग्लौ[163] द्विकौ भवत इति वदन् गुरुलघू तावदनुवदति[164]। ग्लाविति महाधिकारे सत्यपि पुनर्वचनं क्रमनियमार्थम्। गुरूपरि लघुरुच[165]इति स चैकाक्षरस्य प्रस्तारः। द्विकौ द्वे आवृत्ती

(135) M : गाधसूसोनि (133-135) A या ता गणो यदि द्वौ द्वौ गाथ सोऽपि (136) A : द्वन्द्व ; M : द्वन्द्व° (137) A : सद्रुपोपदमालं ; M : बसो गुपो बरो माला (138) A गाथाधिकैः ; M & S : गाथाधिकै ; A drops the lines between 138 & 143 ; S omits the lines between 139 and the end of the verse (140) M : जगुरु (141) M स्याम् युजो द्वयो (142) M : वर्ग मागधिकमती (144) A & M : पादै (145) A : क्वचित् ; M . कृत्य (146) A समपादसमपादै . M : सपारस-मपादै (147) A : °रहापहासिनी (148) A & S drop वा (149) A स्यात् (150) M drops अथ (151) A: °नमन्यत्र (152) M & S: सूचितम् (153) A : समवृत्तावगमनाय : M समवृत्तावगमाय (154) M: प्रक्रियते (155) A & M add भवति (156) M reads the verse प्रस्तारो नष्ट उद्दिष्ट एक. .दिलगक्रिया। संख्या सम -- द्विमोगस्च षडेते प्रत्यया इति ॥ (157) S : तत्रोक्ताद्यादीनां (158) M : समानि वृत्तानि (159) M adds इन्दु . , S adds इन्दु (160) A : प्रस्तर ; M drops the words between 161 & 162. (163) A drops ग्लौ (164) M : तावद्वदति (165) A : गुरूपरिलिखरथ ;

प्रमाणमनयोरिति[166]। द्विकौ द्विगुणाविति[167] यावत्। ग्लौ गुरुलघू द्विकौ कर्तव्यौ प्रस्तारविधौ। स्वयमेवोपर्येकं गुरुमधस्ताच्च[168] लघुं लिखित्वा तौ द्विकौ कुर्यात्। तयोरधः[169] पुनर्द्वौ[170] गुरुलघू लिखेदित्यर्थः ॥

॥ ८ ॥ मिश्रौ च ॥ ३ ॥

एवमेव[171] पार्श्वे मिश्रौ गुरुलघुद्विकौ लिखेत्[172]। मिश्रशब्दः संयुक्तवचनः। तच्च सापेक्ष[173] गुरू द्वौ संयुक्तौ लघू च द्वौ लिखेदिति द्व्यक्षरस्य प्रस्तारः। एतेनैव न्यायेन सर्वेषां छन्दसां सिद्ध एव प्रस्तारः॥ तथापि त्र्यक्षरस्य प्रस्तारमुदाहरणप्रदर्शनायाह—

[101] ॥ ८ ॥ पृथग्ला[174] मिश्राः ॥ ४ ॥[175]

द्विकौ ग्लाविति न्यायेन द्व्यक्षरस्य प्रस्तारं द्विगुणीकुर्यात्। तस्य पार्श्वे ग्ला-[176] गुरुलघवः पृथङ्मिश्राः कार्याः। द्व्यक्षरस्य प्रस्तारं द्विगुणीकृत्य[177] तदुपरि[178] स्थितमष्ट[179]पर्वाणमर्धीकृत्य[180] तस्योपर्यर्धस्य[181] पार्श्वे चतुरो गुरूनधोऽर्धस्य[182] पार्श्वे[183] चतुरो लघून् लिखेत्[184]। स त्र्यक्षरस्य प्रस्तारः॥ तस्योदाहरणमाह—

॥ ८ ॥ वसवस्त्रिकाः ॥ ५ ॥[185]

एतेऽष्टौ[186] त्रिका भौथौस्त्रौमित्यादयः शास्त्रादावुक्ताः। सोऽयं त्र्यक्षरस्य प्रस्तारः। एवं चतुरक्षरं प्रस्तुवन् त्र्यक्षरस्य प्रस्तारं द्विकं कृत्वा[187] तस्य पार्श्वेऽष्टशः पृथङ्मिश्रान्[188] गुरून्[189] लघूंश्च लिखेत्[190]। एवमुत्तरेष्वपि छन्दःसु द्रष्टव्यम्। यास्त्रिका[191] स्त्र्यक्षरस्य प्रस्तारे[192]ऽष्टौ[193] तिरश्चीनाः पङ्क्तयस्ता[194] एकैकस्य वृत्तस्य पादाः। तथान्येऽपि पादास्तादृशस्त्र्यक्षरात्मयः[195] द्रष्टव्याः। एषामेवान्योन्यसांकर्याद्[196]-र्धसमानि विषमाणि च[197] भवन्ति, यानि 'समं तावत्कृत्वः कृतमर्धसममित्या[198]दिनोक्तानि। इति प्रस्तारः[199]॥ तदेष श्लोकः —

पूर्वं पूर्वाद्विकं[200] कुर्यात् प्रस्तारं प्रस्तुवन् परम्।
तस्य पार्श्वे[201] उपर्यर्धे गुरून् कुर्याल्लघूनधः[202]॥

M drops the words between 166 & 167 ; S drops यावत् (168) M omits च (169) M & S: तयोरप्यधः (170) M: पुनरपि द्वौ (171) A : तेषामेव (172) A & S : विलिखेत् (173) A : स्वापेक्षं ; M : स्वापेक्ष्यं (174) M पृथग्लौ (175) A abruptly marks this *sūtra* as 22 for the first time. (176) A: ग्लः (177) A : द्विगुणीकृतम् ; omits the portion between 178 & 179 (180) A : अष्टपर्वाणमधिकृत्य (181) A & S : पूर्वार्धस्य (182) A : अपरार्धस्य ; S : परार्धस्य (183) A drops पार्श्वे (184) M : कुर्यात् (185) A marks the *sūtra* as 23 (186) A drops अष्टौ (187) M : द्विगुणीकृत्य (188) A : मिश्रा (189) M drops गुरून् (190) M & S : विलिखेत् (191) A: यास्ता (192) A & S: त्र्यक्षरप्रस्तारे (193) A drops अष्टौ (194) A drops ताः (195) A : तादृशास्त्र्यक्षरात्मयः ; M: पादास्त्र्यक्षरास्तादृशा (196) A : एषामिवान्योन्येषां संकरात्° ; S : एषामन्योन्यसंकरात्° (197) A drops च (198) M: समं तावत् कृत्वा° M & S drop अर्धसमम् (199) M drops the sentence (200) A: पूर्वाद्विकं ; M: पूर्वं द्विकं (201) A: पार्श्वं पुनरर्धे (202) M: °स्त्वधं स्तथा

दृष्टात् कुर्यात्लि[203]खित्वेष्टं विपरीतमधो लिखेत् ।
आद्य[204] गुर्वन्तनूर्ध्वन्तु[205] समामिष्टाक्षरैर्लिखेत् ॥  इति ।

अथवा मिश्रौ चेत्येतद् सूत्रं मात्राच्छन्दोविषयम् । मात्राच्छन्दसामपि वर्णच्छन्दसामिव प्रस्तारादयः कार्याः । इयान् विशेषः । सर्वत्र लघुस्थानेषु द्वौ द्वौ लघू मिश्रौ कुर्याद्गुरुस्थानेषु गुरुरेक एव[206] । द्विमात्रत्वात् । स्वत एव मिश्रत्वसिद्धेः । 'पृथग्ला मिश्रा' इति पूर्ववत् । अथवा 'पृथग्ला मिश्रा' इत्यार्यासु पूर्वप्रस्तारस्य पुनः पुनरभ्यासेन द्वितीयादिगण[207]स्थानेषु जगणादीनां न्यासं[208] दर्शयति । [102] जगणेषु लघूनां गुरुव्यपेतानां पृथग्भावाल्लघुद्वयत्वादत्र[209] मिश्रत्वसिद्धेस्तेन 'पृथक् ला' [210] इति[211] पदच्छेदः । न तु ग्ला इति ।[212]

अथ[213] यदि कश्चिज्जिज्ञासेत—अस्य[214] छन्दस एतावतिथं[215] वृत्तं कीदृशमिति तस्मै नष्टं नाम प्रत्ययमाह—

॥ ८ ॥ लर्धे ॥ ६ ॥[216]

यावतिथं वृत्तं जिज्ञासते तस्याः संख्याया अर्धमपनयेत् । अर्धे अपनीते[217] लघुर्मध्यः । पुनस्तस्य[218]-अर्धमर्धशोऽपनीय लघुं गृह्णीयात् । तद्यथा—त्र्यक्षरस्याष्टमं वृत्तं कीदृगिति[219] जिज्ञासमानोऽष्टक[220]-संख्याया अर्धमपनीय लघुं लिखेत्[221] । चत्वार्यवशिष्यन्ते[222] । तेषामर्धापनयेऽर्धे लघुम् । द्वे अवशिष्येते[223] । तयो[224]रप्यर्धे[225]मिति त्रिलघुवृत्तमष्टमम् । तथा चोक्तं 'न इसन्ति'ति ।

यदा तु द्वितीयं जिज्ञासते तदा द्वित्वसंख्याया अर्धादेकं[226] लघुं लिखेत्[227] । एकमवशिष्यते । तस्यार्धीकर्तुं[228] न शक्यत इत्यत आह—

॥ ८ ॥ सैके ग् ॥ ७ ॥[229]

यदेकं विषमसंख्यात्वादर्धं न[230] ददाति तस्मिन्नेकं प्रक्षिप्या[231]र्धयेत् । सैके तस्मिन्नर्धीकृते गुरुर्मध्यः । पुनरवशिष्टमेकमेकेन[232] संयुज्यार्धयित्वैकं गुरुं गृह्णीयात् । इत्यादावेको लघुः परौ[233] गुरू द्वाविति

203) M & S : कुर्वन् (204) A : आवन्त° ; M : आद्यं कुर्व° (205) S °ब (206) A & M add गुरो here. (207) M: गुण° (208) M & [illegible] : न्याय (209) A: पृथग् भावाल्लघुद्वयात्त्र ; M, पृथग्भावा लघु दयत्वादत्र; S: पृथग्भावा लघुत्वादत्र (210) A & M : पृथग्ला ; M drops the words between 211 & 212 (213) A : अथवा (214) M : तस्य (215) A : एतावत (216) A marks as 24 (217) M : अपगते ; S अपहृते (218) A drops अपि (219) A & M : : कीदृशमिति (220) M & S अष्टसंख्याया° (221) M : त्रिलिखेत् (222) A : चत्वारो निशिष्यन्ते ; S : चत्वारो प्रशिष्यन्ते (223) A & M : दात्र-वशिष्येते (224) M : त्रयो° ; M omits the words between 225 & 226 due [illegible] haplology , S omits from तथा to जिज्ञासते ( haplology between तथा and तदा ) (227) M drops लिखेत् (228) A : तस्यार्धीकर्तुं ; M: तदार्धीकृत कर्तुं (229) A marks this *sūtra* as 25 (230) A : स (231) M : तस्मिन्नेकस्मिन्निक्षिप्य (232) A & S °शिष्टमेकमेकेनैकेन (233) A : परो

ऽन्त्याक्षरस्य द्वितीयं वृत्तम् । तथा चोक्तं 'वरा सा च'[234] इति । एवं सर्वत्र समसंख्याया दलने[235] लघुर्विषमायाः[236] सैकाया दलने गुरुरिति नष्टोद्धारं[237] कुर्यात् । तदेष श्लोकः[238]—

नष्टं यावतिथं वृत्तं तत्संख्यां दलयेत् समाम्[239] ।
लघुं लिखेद्गुरुं सैकां विषमां[240] दलयन् लिखेत् ॥ इति ।[241]

अथ यदि कश्चित्पृच्छमानः छन्दोवृत्तप्रस्तारे इदं वृत्तं कतिथमिति[242], स उद्दिष्टेन प्रतिवक्तव्य इत्याह—

॥ ८ ॥ प्रतिलोमगुणं द्विर्लाद्यम् ॥ ८ ॥[243]

स यद्वृत्तं पृच्छेत्तस्य लघूनामन्त्यं वाऽक्षरमादि[244] कृत्वा प्रतिलोमं [ 103 ] गुणयेत्[245] । गुरुसंख्यासतो गुरुर्विगुणत्वमन्यत्वात् प्रथमातिक्रमे च[246] कारणाभावादेकत्वसंख्यामेव गुणयेत् । लघ्वादि चेद्गुरुममेकत्वसंख्यामन्त्यलघुस्थाने[247] द्विष्कृत्वा ततोऽर्वाचीनेऽक्षरे पुनर्द्विगुणयेत्[248] । ततोऽर्वाचीनेषु[249] पुनरिति सर्ववृत्तं[250] परिक्रम्य[251] यां संख्यामनुवीत[252] तावतिथं तद्वृत्तं[253] ब्रूयात् । तद्यथा—'न हसतं' इति[254] ऽष्टाक्षरस्य वृत्तम् । तत्रान्त्यस्य लघो[255] सकारस्य[256] स्थाने द्विष्कृत्वामेकत्वसंख्यां हकारस्य स्थाने[257] गुणयेत्[258] । चत्वारि भवन्ति । पुनर्नकारस्य[259] स्थाने गुणयेत् । अष्टौ सम्पद्यन्ते । तेन[260] तदष्टमं वृत्तम् ।

यदा तु 'सा ते वच ते' इत्येव लिखास्यते[261], तदा सर्वेत्यत्र[262] द्विष्कृत्वामेकत्वसंख्यां त इत्यत्र द्विर्गुणयेत्[263] । चत्वारि भवन्ति । तत्र कश्चिद्विशेषमाह[264]—

॥ ८ ॥ ततोऽप्येकं[265] जह्यात् ॥ ९ ॥[266]

ततः संख्यापिण्डादेकं जह्यात् ।[267] गुरुस्थाने द्विगुणीकृत्यैकं जह्यात् । चतुर्भ्यः एकस्यापगात्त्रयोऽयमेवावशिष्यन्ते[268] । पुनः तेऽत्र[269] द्विर्गुणयेत्[270] । षड् भवन्ति । षड्भ्य एकस्यापगात् पञ्चावशिष्यन्ते ।

(234) M drops च (235) A adds सते here. (236) M & S : विषमसंख्याया (237) A & S : नष्टोद्धारं (238) S omits तदेष श्लोकः (239) M : समं (240) A : विषमा (241) A & S omits (242) A omits वृत्तं ; A, M & S : कतिथमिति (243) A marks this as usual as 26 (244) A reads : लघूनामन्त्यं लघुमेव......रमादिं (245) A : गणयेत् ; M : प्रतिलोमगुणं गुणयेत् (246) A omits च (247) A : अन्त्ये प्रथमाद् अन्त्यलघ्वक्षरस्य स्थाने (248) A : ततोऽर्वाचीने .....येत् (249) A & S : ततोऽर्वाचीनेष्वक्षरे (250) A : सर्वं वृत्तं (251) A : प्रतिक्रम्य ; M : परिक्रमन् (252) A : यावद् वृत्तमनुवीत (253) M & S omit तद् (254) M : न हसेति (255) A : लघुस्थाने (256) A adds लघोः before स्थाने ; S drops सकारस्य (257) A drops स्थाने ; M adds च (258) M : गुणयेत् (259) A : नरौ तस्य ; S : प्रथम° (260) M omits तेन (261) A : सा ते वचेतीति इत्यत्र ; S drops तत्र (262) M : त इत्यत्र (263) S : द्विरेव द्विगुणयेत् (264) M : कश्चिद्विशेषमाह (265) M : ततोऽप्येकं (266) A marks this as 27. (267) A adds गुरुस्थानं here (268) A drops एव ; M : त्रयोऽव च शिष्यन्ते (269) A : तेऽत्र (270) A & M : द्विगुणयेत्

तेन षष्ठमं तद्वृत्त'[271] सा ते च तिति।[272] एवमन्यत्रापि लघुषु द्वैगुण्येन[273] गुरुषु द्विगुणादेकत्यागेन चोद्दिष्ट'[274] विविच्यात्। तदेष श्लोकः—

विविक्षन् वृत्तमुद्दिष्टमादिं कृत्वाऽन्त्यमक्षरम्[275] ।
गुणयेद्दिक्ष्वृत्तं लादौ गुरावेकं त्यजेदपि ॥ इति।

अथास्मिन् छन्दसि[276] कति लघुशून्यानि वृत्तानि[277] कत्येकलघूनि[278] कति द्विलघूनि कति त्रिलघूनि[279] कति वा गुरुशून्यानि कति[280] चैकगुरूणि कति द्विगुरूणि[281] कति त्रिगुरू[282]णीति वा[283] मीमांसमानायान्यं प्रत्ययमाह[284]—

॥ ८ ॥ द्विरर्धे ॥ १० ॥[285]

[104] यस्मिन् छन्दसि जिज्ञासेत[286] तत्संख्याया अर्धेऽपनीते[287] या संख्याऽवशिष्यते, तावन्ति कोष्ठानि कुर्यात्। यथा—द्व्यक्षरस्य द्वित्वसंख्याया अर्धत्यागादेकम[288]वशिष्यते। तत एकं कोष्ठं कुर्यात्। इदमर्धकोष्ठं नाम। स्वेच्छयाऽन्यदप्येकं कोष्ठं कुर्यात्। तच्छून्यकोष्ठं नाम। एवमन्येष्वपि छन्दःसु कोष्ठकल्पना। विषमसंख्येषु[289] त्र्यक्षरपञ्चाक्षरादिष्वेकं त्यक्त्वाऽर्धयेत्[290]। त्र्यक्षरस्याप्यर्ध-[291] कोष्ठमेकमेव। शून्यकोष्ठश्च सर्वत्राप्येकमेव[292]। शून्यकोष्ठञ्च प्रथमं[293] लिखेत्ततोऽर्धकोष्ठानि।

द्व्यक्षरे[294] तावदुच्यते[295]—यच्छून्यकोष्ठं'[296] तत्रैकाङ्कं न्यसेत्। प्रथमातिक्रमे[297] कारणाभावात्। एवं स्थिते[298] सूत्रमिदमुपतिष्ठते 'द्विरर्धे' इति। अर्धे अर्धकोष्ठे[299] द्विर्न्यसेत्। न्यस्तान्यस्यानुक्रमाद् छन्दातिक्रमे च[300] कारणाभावात् पूर्वस्य शून्यकोष्ठस्याङ्कमेवार्धे द्विष्कृत्वा[301] न्यसेत्। ते[302] द्वे भवतः। एवं सर्वत्र कोष्ठेषु पूर्वपूर्वाङ्कमेवोपर्युपरि न्यसेत्[303]। इदानीं न्यस्तस्याङ्कस्य विनियोगमाह[304]—

॥ ८ ॥ रूपे शून्यम् ॥ ११ ॥[305]

रूपशब्द[306] एकवचनः। यत् प्रथमे कोष्ठे एकं तस्मिन् रूपे लघुशून्यं गुरुशून्यं[307] वा वृत्त'[308] भवतीति प्रतिपत्तव्यम्। प्रदर्शनार्थञ्चेदम्। तेनैतत् सिद्धम्—प्रथमे[309] लघुशून्यं[310] द्वितीये एकलघूनि तृतीये द्विल[311]घूनीत्यादि प्रतिपत्तव्यम्।

(271) A drops तद् ; M : षद्वृत्त A drops the words between 271 & 272 (272) M : यातिनीति (273) A : लघुद्वैगुण्येन ; M : लघुस्थानेषु द्विगुण्येन (274) A : स्वोद्दिष्ट ; S : नोद्दिष्ट (275) M : मदिदृत्त्वान्त ... क्षर (276) M : अथास्य छन्दस A drops the words between 276 & 277. (278) A & S add वृत्तानि ; A drops the words between 279 & 282 ; S drops the words between 281 & 282. (283) M drops वा (284) A : मीमांसमानायां सप्रत्ययमाह (285) A marks as 28 (286) A : जिज्ञासते (287) अपनीता (288) A : सत्यायादर्धत्यागाद ; M : A : सङ्ख्यार्धत्यागाद (289) M : विषमाक्षरसंख्येषु , A drops the portion between 290 & 291 ; S drops the whole sentence. (292) M drops this sentence (293) S drops प्रथम (294) A adds तत्र here (295) A : द्व्यक्षरेण (296) M : यच्चान्यकोष्ठ (297) M drops° क्रमे (298) A adds सति (299) A : अर्धे कोष्ठे (300) A & S क्रमातिक्रमेण (301) M : द्वि (302) M : तेन (303) A drops उपर्युपरि and reads विन्यसेत् with S (304) A : नियोगमाह (305) A reads the sūtra twice : रूपेण शून्यम् (च) रूपे शून्यम् and marks it as 29. (306) M : शून्यशब्द (307) M drops गुरुशून्यं (308) M & S add वा (309) A : प्रथम° (310) A & S add वृत्तम् (311) A: त्रि°

ततो द्व्यक्षरस्य प्रथमे कोष्ठे[312] यदेकं तदेकं लघुशून्यं सर्वगुरुकं वृत्त[313], यद् द्वितीये द्वयं[314] ते द्वे एकलघुनी वृत्ते[315]। पुनर्निवृत्य[316] शून्यकोष्ठे[317] गृह्णीयात्। यदेव प्रथमकोष्ठे[318] एकं[319] तदेकं गुरुशून्यं[320] द्विलघुकमिति[321] लघुज्ञानम्। एतेनैव गुरुज्ञानमपि। [105] यत् प्रथम एकं तदेकं गुरुशून्यं[322] सर्वलघुकम्[323]। यद् द्वितीये द्वयं ते द्वे एकगुरुणी। पुनर्निवर्तेत। यदेव प्रथम एकं तदेकं[324] लघुशून्यं[325] द्विगुरुकमिति[326]। एतेनैव[327] न्यायेनान्येषामपि छन्दसामेकद्व्यादि[328]प्रस्तारोक्ता।

कथं पुनरेकाक्षरस्योक्ता। तस्य हि शून्यकोष्ठमेव[329]। तत्रैक लघुशून्यं गुरुशून्यं वा स्यादित्यत आह —

॥ ८ ॥ द्विः शून्ये ॥ १२ ॥[330]

यदव्शून्यकोष्ठे[331] स्थितं तद् द्विर्गृह्णीयात्[332]। तेनैकं[333] लघुशून्यमेकं गुरुशून्यमिति[334]न्यायदर्शनार्थश्चेद[335] सूत्रम्[336]। तेनैतत् सिद्धम्। येषां[337] विषमसंख्यानामेक[338]त्रिपञ्चाक्षरादीनां[339] छन्दसां कोष्ठाप[340]कर्षात् सर्वाणि वृत्तानि न दृश्यन्ते, तेषां तदर्थमेकस्मिन् कोष्ठे द्विर्ग्रहणम्। तच्च कोष्ठमन्त्यम एव[341]। इतरेषां गतप्रत्यागताभ्यां[342] द्विर्ग्रहणस्य सिद्धत्वात्[343]।

तथाहि त्र्यक्षरस्यापि द्वे एव कोष्ठे वस्तुतः। कृत्स्नाति[344]क्रमे कारणाभावात्। तदेव[345] द्व्यक्षरन्यासं प्रथमं[346] कृत्वा द्विरर्धं इति वचनादर्धे द्वितीयन्यासं[347] कुर्वन् पूर्वाङ्कं तस्मिन्न्यसेत्[348]। तानि त्रीणि सम्पद्यन्ते। यत् प्रथममेकं तदेकं लघुशून्यं[349] 'मो भो स्त्रो म' इति। यद् द्वितीये त्रयं तानि त्रीण्येकलघूनि— 'यरा सा य', 'रा गुहा र', 'सा ते क्व त' इति। तान्येव त्रीणि[350] पुनरेकवारं गृह्णीयात्। ततो द्विलघून्यपि त्रीणि—'मधुरा स', 'कदा स ज', 'किं वद भ' इति। पुनर्निवर्तेत। यदेव प्रथम एकं तदेकं गुरुशून्यं[351] 'न हत न' इति।

चतुरक्षरस्य त्रीणि[352] कोष्ठानि। अन्ययोरेव[353] कोष्ठयोरन्त[354] एकं कोष्ठं कुर्यात्। तस्मिन्ननन्तरकोष्ठगतं भयं न्यसेत्। स प्रथमो न्यासः। द्वितीयं कुर्वन् पूर्वपूर्वाङ्कानुक्रमे न्यसेत्। यत् प्रथम एकं तदेकं[355]

(312) A : प्रथमेनो (313) M : सर्वगुरुवृत्त (314) M : द्वितये (315) S drops वृत्ते ; A drops the words between 314 & 316 (317) M : शून्ये (318) M : प्रथमे कोष्ठे (319) M & S : यदेवं (320) A drops गुरुशून्यं ; M : तदेकगुरुशून्यं (321) M : सर्वलघु कमिति (322) M: तदेकगुरुशून्यम् (323) M drops सर्वलघुकम् ; A drops the portion between 324 & 325 (326) A drops इति (327) M drops एव (328) M: °मेकमक्षरादि (329) M: शून्यमेवमेव : S° शून्यकोष्ठमात्र° (330) A marks as 30 (331) A: यच्छून्यकोष्ठे ; M: यत्तच्छून्यं कोष्ठे (332) A : तद्विगृहीयात् (333) A : नैकं (334) M: शून्यमिति (335) M: न्यायदर्शनं चेदम् (336) M & S drop सूत्रम् (337) M: एषां (338) M & S संख्यानाम् (339) ॰त्र्यक्षरपञ्चाक्षरादीनां (M) (340) M: कान्दा° (341) A· ..........एमन्तिमे वा ; M: तच्च कोष्ठमेकमेव (342) A: निवृत्तंदृश्ये : S: निर्गताभ्यां (343) A: द्विग्रहणसिद्धत्वात् (344) M: पता° (345) S drops (346) M: द्व्यक्षर प्रथमन्यासं (347) A: अर्धे द्वितीयन्यासं ; M· अर्धे द्वितीयं न्यासं (348) A: विन्यसेत् (349) M drops इङ्। M M omits the portion between 350 & 351 ; S omits the last sentence (352) A: तदेक त्रिलघुकमिति सर्वलघुकम् (353) A: अनयोरेव (354) A: कोष्ठयोरन्त (355) M drops तदेकं

लघुशून्यम्। यद्द्वितीये चतुष्कं तानि[356] चत्वार्येकलघूनि। यत्तृतीये षट्कं तानि[357] षड् द्विलघूनि। पुनर्निवर्तेत[358]। यदेव द्वितीये[359] चतुष्कं तानि[360] चत्वारि[361] त्रिलघूनि। यत् प्रथम एकं तदेकं गुरुशून्यं[362] चतुर्लघुकमिति[363]।

पञ्चाक्षरस्यापि शीघ्रमेव कोष्ठानि। एतमेव चतुरक्षरन्यासं[364] प्रथम[365] कृत्वा द्वितीयं कुर्वन् [106] पूर्वपूर्वाङ्कमुत्तरत्र[366] न्यसेत्। यत् प्रथम एकं तदेक[367] लघुशून्यम्। यद्द्वितीये[368] पञ्चकं तानि[369] पञ्चैकलघूनि[370]। यत्तृतीये दशक[371] तानि दश द्विलघूनि। तान्येव दश पुनरप्येकवारं गृह्णीयात्। एवमन्येष्वपि विषमाक्षरसंख्येषु सप्ताक्षरनवाक्षरप्रभृतिष्वन्त्यं[372] कोष्ठं[373] द्विर्द्विः[374] गृह्णीयात्। तत[375] स्त्रिलघून्यपि दश पुनर्निवर्तेत[376]। यदेव द्वितीये पञ्चकं तानि पञ्च चतुर्लघूनि। यत् प्रथम एकं तदेकं पञ्चलघुकमिति[377]।

एवमन्येष्वपि छन्दःसु समाक्षरेषु[378] पूर्वच्छन्दोन्यासं प्रथमं[379] कृत्वा द्वितीयं कुर्वन् पूर्वपूर्वाङ्कमुत्तरत्र[380] न्यसेत्। वि[381]षमा[382]क्षरेषु च एकं[383] कोष्ठमन्ते लिखित्वा तस्मिन्ननन्तरं कोष्ठाङ्कं न्यसेत्। स प्रथमो न्यासः। द्वितीयं कुर्वन् पूर्वपूर्वाङ्कमुत्तरे न्यसेत[384]। सर्वत्र च[385] निवृत्त्यापि गृह्णीयात्। इत्येकद्व्यादिलघुगुरुज्ञानम्[386]। तदेतौ[387] श्लोकौ[388]—

> आद्यं[389] सकृत् परेषु[390] द्विः[391] पूर्वपूर्वगतं क्षिपेत्।
> पूर्वच्छन्दोऽत्र आद्यः स्या[392]न्न्यासे[393]ऽन्यच्छन्दसो[394] विधौ॥
> लघुशून्यैकलघ्वादि क्रमादूह्यं[395] निवर्त्य च[396]।
> छन्दः स्वयुग्मसंख्येषु आद्यं कोष्ठे द्विरन्तिमे॥ इति

अथ वृत्तसंख्याऽधिक्रियते[397]। यस्य छन्दसः संख्यां[398] जिज्ञासेत[399] तदक्षरसंख्यायाः अर्धमपनीयार्धं नाम चिह्नं कुर्यात्। पुनरपि शिष्ट[400]संख्याया अर्धापनयनादर्धचिह्नं[401] पुनरपनयनादर्धचिह्नं[402] कृत्वा समाप्ते[403]

(356) A: चतुर्ष्कं ; M: चतुष्कतानि (357) A: षट्कतानि (358) M: निवर्तते (359) A drops एव (360) M: चतुष्कतानि (361) M: त्रि in place of चत्वारि (362) M & S drop गुरुशून्य (363) S drops इति (364) A: चतुरक्षरस्य न्यासं ; M: चतुरक्षर न्यासं (365) M adds न्या स (366) M: °पूर्वाङ्कम ...त्तरं (367) A drops तदेकं (368) A: यद्द्वितीयं (369) M: पञ्चकानि (370) M: पञ्चकलघूनि (371) A: यत्तृतीयद ....कं (372) A: प्रभृतिषु अन्ये ; M: अन्त्ये (373) A: कोष्ठो ; M: कोष्ठ (374) A drops द्विर्द्विः (375) A: ततस्ततः (376) M & S: निवर्तते (377) M: तदेकपञ्चलघुकमिति ; S omits इति (378) A, M & S ; विषमाक्षरेषु (379) M drops प्रथम (380) A & M: उत्तरेषु ; M drops the words between 381 & 384 (382) A: समाक्षरेषु ; S: समाक्षरे (383) A: एके (385) A drops च (386) M: इत्येकलघ्वादि गुरुलघुज्ञानम् (387) A: तदन्यौ ; S: तदिमौ (388) M adds भवतः (389) A: आद्ये (390) M: परेषु (391) A: द्वेः (392) M: आद्यस्य न्यासः (393) S drops न्यासे (394) A: अन्यच्छन्दसि (395) S drops ऊह्यं (396) M: निवृत्य (397) A: वृत्तसंख्या क्रियते (398) A: छन्दसः संख्या ; M: छन्द: संख्या ; S: छन्दसि संख्या (399) M: जिज्ञासयते (400) M drops पुनरपि and reads अपशिष्ट° , S: पुनरप्यशेष° (401) A: अर्धापनयार्धचिह्नं, and drops the words between 401 & 402 due to haplology. (403) A: इत्यसमाप्तिः ; M: इत्यासमाप्ते

कुर्यात्। या पुनर्विषमसंख्यार्धीकर्तुं[404] न शक्यते,[405] तामेकेन शून्यां कुर्यात्। तत्रैकं शून्यं नाम चिह्नं कुर्यात्[406]। अवशिष्टसंख्यां पूर्ववदर्धीकुर्यात्[407]। तद्यथा—षडक्षरस्य[408] जिज्ञासायां षण्णामर्धमपनीयैकमर्धचिह्नं कुर्यात्। त्रयोऽवशिष्यन्ते। त्रयाणामर्धीकर्तुमशक्यत्वादेकेन शून्यतां कृत्वा शून्यचिह्नं कुर्यात्। द्वे अवशिष्येते। तयोरर्धापनयना[409]दर्धचिह्नं कुर्यात्। एकमवशिष्यते। तदप्य[410]पनीय शून्यचिह्नं कुर्यात्। इत्येवं स्थिते सूत्रमिदमुपतिष्ठते—

॥ ८ ॥ तावदर्धे तद्गुणितम्[411] ॥ १३ ॥

द्विः शून्य[412]इत्यनुवर्तते[413]। अन्ते शून्यस्थाने[414] द्विष्कुर्यात्। अभावस्य कर्तुमशक्यत्वात् [107] प्रथमातिक्रमे च[415] कारणाभावा[416]देकत्वसंख्यामेव द्विष्कुर्यात्। द्वे भवतः। तावदर्धे तद्गुणितमिति[417]। यत्तच्छून्यकोष्ठे[418] स्थितं द्वयं[419] तत्तदनन्तरेऽर्धस्थाने[420] तावत्कृत्वो[421]गुणयेत्। चत्वारि भवन्ति। पुनश्च द्विःशून्य इति न्यायेनानन्तरे[422] शून्यकोष्ठे[423] द्विः कुर्यात्। अष्टौ सम्पद्यन्ते। पुनस्तावदर्धे तद्गुणितमिति न्यायेनानन्तरे तावत्कृत्वः[424] कुर्यात्। तान्येतान्यष्टावष्टकानि[425] चतुःषष्टिः सम्पद्यन्ते। तेन तावन्ति[426] षडक्षरस्य वृत्तानि। एवं सर्वेष्वपि छन्दःसु द्रष्टव्यम्। एवञ्च त्र्यक्षरस्याष्टौ[427] सम्पद्यन्ते। तथा चोक्तं—

वसवस्त्रिका[428] इति। तदेवं संख्योक्ता[429]। तदेष श्लोकः—

शून्येऽङ्के[430] द्विः कृतैकाङ्कः तावत् कृत्वकृतोऽर्धके[431]।
पुनः शून्ये पुनश्चार्धे[432] पुनः संख्या[433] प्रकल्पते[434] ॥ इति।

अन्यथाऽपि[435] व्याख्या तावदर्धे तद्गुणितमिति[436] सूत्रस्य। यच्छन्दो जिज्ञासते तदर्धाक्षरं[437] संख्ये छन्दसि या वृत्तसंख्या[438] तां तावत्कृत्वो[439]गुणयेत्। सा[440] जिज्ञासितस्य संख्या। तद्यथा—षोडशाक्षरछन्दः सम्बन्धाष्टाक्षरस्य छन्दसः संख्यां[441] तावत्कृत्वः[442] कुर्यात्। सा षोडशाक्षरस्य संख्या।

(404) A : पुनर्विषमसंख्यार्धीकर्तु° ; M : या पुनर्विषमसंख्यापि कर्तु° (405) A : शक्या (406) A : स्यात् (407) M : अर्धं कुर्यात् ; A : °दर्धीकुर्यात् (408) M : षडक्षरजिज्ञासायां (409) A : °रर्धापनयात् अर्धचिह्न (410) A & S drop अपि (411) A & S (*sūtrapāṭha*) : तद्गणितम् (412) M : द्विः शून्यमित्य° (413) A drops this sentence. (414) A adds here द्विः शून्य इति (415) A & M drop च (416) M reads च here (417) M drops इति (418) A : यत्तच्छून्ये ; M : यत्तच्छून्यकोष्ठेषु (419) A : स्थितद्वयं (420) A तदनन्तरार्धस्थानि ; M : तदनन्तरे पुनरर्धस्थाने (421) A & S : तावत् कृत्वा (422) M : न्यायेना तरे (423) A : शून्ये ; M : शून्यकोष्ठेषु (424) A : तावत्कृतं ; S : तावत्कृत्वकृतं (425) M : तानीमान्यष्टकानि (426) M : तावति (427) M adds वृत्तानि (428) A : वसवस्त्रिकौ (429) A : संख्योक्तौ (430) A : शून्यशून्ये (431) A : तावत् कृत्वा .... के ; M : तावत्कृत्वः कृतोऽर्धके (432) M : पुनश्चार्धं (433) M & S : संख्या (434) M : प्रकल्पिते ; S : प्रकल्प्यते (435) A omits अपि (436) A & S add अस्य (437) A : तदर्धमर्ध्ये (438) M : यावन्तः संख्या (439) A : तां तावत् कृत्वा ; M : तास्तावत्कृत्वो (440) A drops सा (441) A : संख्या (442) A : तावत्कृत्वा

चतुरक्षरस्य[443] तावत्कृत्वः करणे[444] षट्पञ्चाशदक्षरस्य[445] संख्या। द्व्यक्षरस्य तथा[446] करणे चतुरक्षरस्येति[447] सर्वत्रोन्नेयम्[448]।

## ॥ ८ ॥ द्विर्द्व्यूनं तदन्तानाम् ॥ १४ ॥[449]

वृत्तसंख्यां द्विःकृत्वा द्वाभ्याम् [108]नां कुर्यात्। सा तदन्तानां छन्दसां वृत्तसंख्या। तथाहि त्र्यक्षरस्य वृत्तान्यष्टौ। तानि द्विष्कृतानि[450] द्व्यूनानि चतुर्दश[451]। ततश्चतुर्दश[452] वृत्तानि मिलितानि[453] तदन्तानां त्र्यक्षरान्तानामेकाक्षरद्व्यक्षरत्र्यक्षराणाम्। एवमन्यत्राप्येवम्[454]। यस्य कस्यचिन्महत्तरच्छन्दसः संख्यां द्विःकृत्य[455] यस्य कस्यचिद्[456]अल्पस्य छन्दसः[457] संख्यां तत्रापनयेत्[458]। यस्य संख्याऽपनीयते तदादीनामितरान्तानां छन्दसि[459] वृत्तसंख्या।

अथास्य छन्दसः प्रस्तार एतावत्यां[460] भूमौ समाप्यत[461] इति ज्ञापनायाध्वयोगमाह —

## ॥ ८ ॥ एकोनाऽध्वा[462] ॥ १५ ॥

वृत्तसंख्यामेव[463] द्विष्कृतामेकोनां[464] कुर्यात्। अध्वा प्रस्तारभूमिर्भवति। यथा— त्र्यक्षरस्य[465] छन्दसोऽष्टौ वृत्तानि[466] द्विष्कृतान्येकोनानि पञ्चदश। ततः पञ्चदशस्वङ्गुलिषु[467] त्र्यक्षरं प्रस्तार्यते। अष्टभि[468]र्वृत्तैरष्टाङ्गुलयोऽधिष्ठीयन्तेऽ[469]न्तरालैश्च[470] सप्तेति। पञ्चशाख्यायिनः प्रायेण "एकोने[471]ऽद्वे" इति[472] वदन्ति। सः प्रमादपाठः[473]। इत्यध्वयोगः। तदेष श्लोकः—

> अध्वा स्याद्वृत्त[474]संख्यैव द्विगुणैकेन वर्जिता।
> सक्षेपोऽयं[475] प्रत्ययानां विस्तार[476]स्तूत्तरे कृतः॥ इति।

## ॥ ८ ॥ परे पूर्णं परे पूर्णमिति ॥ १६ ॥

पुनः संख्यामेवानुवर्णयति[477]। पूर्वस्य छन्दसः संख्यां द्विः कृतां पूर्णां[478] स्थापयेत्। न द्वाभ्यामेकेन[479] वा हीनां कुर्यात्। परे छन्दसि जिज्ञासिते सा परस्य संख्या[480]। तद्यथा—एकाक्षरस्य द्वे वृत्ते।

(443) M adds वृत्तसंख्यां (444) A : तावत्कृत्वा करणे : M : तावत्कृत्व कुर्यात् (445) M : वृत्तसंख्या S : °क्षरस्यापि संख्या (446) A drops तथा ; M : तथा द्व्यक्षरस्य तावत्कृत्व करणे (447) A drops चतुरक्षर° (448) A : सर्वतोऽन्वेयम् (449) A marks this as 32. (450) M drops द्विष्कृतानि (451) M : चतुर्दशक, then drops the words till 452. (453) M : मिलितानां (454) A drops एव ; S : चेदं (455) A : द्विष्कृत्वा (456) M : यस्यचिदल्पस्य (457) A omits छन्दस. (458) M & S omit तत्र° (459) M omits छन्दसि (460) A : एतावत्या (461) M : सम्पाद्यते (462) A : एको नेध्वा (463) M : द्वित्वसंख्यामेव (464) M: द्विष्कृत्य तामेकेनोना ; S द्विष्कृत्यैकोनां (465) A adds एव (466) M adds तानि (467) M पञ्चदशाङ्गुलिषु (468) M : अष्टभिः (469) M : अधिष्ठुयन्ते (470) A : अन्तरालैश्च ; M : अन्तराले (471) M : ये को ने (472) A : द्वेति ; M : इति ; S : इति (473) A : प्रमादपाठ ; S : सप्रमादपाठ (474) M : अध्वास्य (475) A : प्रक्षेपो ; S : प्रक्षेपो (476) M : विस्तर° (477) M : °वर्तयन्ति (478) M drops पूर्णां (479) M : नाभ्यामेको न (480) M : परसंख्या

द्विगुणा[481]द्‌ ... ऽक्षरस्य संख्या। दशाक्षरस्य द्विगुणीकृते[482] ष्यक्षरस्येत्येवमुत्कृतिपर्यन्तमुन्नेयम्[483]। सूत्राभ्यासस्तु[484] शास्त्रपरिसमाप्तिद्योतनार्थः। अथवा [109] सूत्रस्यावृत्त्या[485] निःशेषप्रस्तारं प्रासाद[486]-प्रस्तारञ्च सूचयति। एकद्वयादि-लघुगुरुज्ञानार्थं परे पूर्णमिति[487]। परे कोष्ठे पूर्वकोष्ठाङ्कं[488] पूर्णं कृत्स्नं[489] निवेशयेदित्यर्थः। इतिशब्दः प्रकारार्थः। एवंप्रकाराः प्रत्यया उन्नेया इति[490]।

तथाहि[491] प्रस्ताराद्याः[492] पादेषु चतुर्षु कृताः[493] समार्धसमविषम[494]विषयः स्युः। छन्दसि चतुर्गुणयेत्[495]। द्विगुणे छन्दसि[496] ये[497] प्रत्यया भवन्ति पाद इत्यर्धस्य च ते पादचतुष्कस्य च ज्ञेयाः[498]। तद्यथा—[499]षडक्षरे [500]यः प्रस्तारस्य[501]क्षरस्य सोऽर्धे[502] स्यात्। यो द्वादशाक्षरोऽसौ[503] कृत्स्नस्य च्यक्षरस्य स्यात्। प्रस्तारेऽक्षरसंख्या छन्दोऽक्षरगणितवृत्तसंख्या स्यात्। गुरुलघुसंख्यानां मात्रासंख्या तु स्यादर्धा[504]॥

छन्दोज्ञानमिदं भवाङ्गवतो लेभे सुराणां गुरु-
स्तस्माद् दुश्च्यवनस्ततोऽसुरगुरुर्माण्डव्यनामा ततः।
माण्डव्यादपि सैत[505]वस्तत ऋषिर्यास्क[506]स्ततः पिङ्गल-
स्तस्येदं यशसा गुरोर्भुवि धृतं प्राप्यास्मदाद्यैः क्रमात्॥ इति।

इति साधुना यतिवरायणीनामिव यादवप्रकाशेन।
कविदयितानां पिङ्गलशास्त्राद्वृत्तविधिरुज्जह्रे[507]॥

इति भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिभाष्ये अष्टमोऽध्यायः॥



(481) A omits द्विगुणात् (482) M : द्विगुणीकृते (483) M : °मुन्नेयः (484) M omits तु (485) A : द्वितीयमा...वृत्त्या ; S : सूत्रीयावृत्त्या (486) M : प्रसार (487) A & S omit परे पूर्णमिति (488) M : पूर्वकोष्ठांकं (489) M : इह (490) M drops इति (491) A drops तथाहि ; S : तथैव (492) A : प्रस्तारान्या ; M adds ; पादे समविषमेयें समार्धविषमे ; S adds पादेषु (493) M adds अर्ध : (494) M : °विषमे विषय: (495) M drops the sentence (496) A drops छन्दसि (497) A : च in place of ये ; S : द्विगुणे च छन्दसि ये (498) M adds छन्दसि (499) A adds here छन्दसि (500) M : षडरे (501) M adds स. (502) A : सार्धे (503) A : सः in place of असौ (504) A : गुरुलघुसंख्यानां मानां संख्या तु साप्यर्धा ; M : गुरुलघुसंख्यायोरा मात्रा संख्या तु साप्यर्धा ; S : गुरुलघुसंख्ययोर्मात्रासंख्या तु सा स्यर्धा : M drops the words between 505 & 506 (507) None of the Mss, all Nāgarī has a correct reading ; A : साधुनाय तिरस्त्रीणामिव यादवप्रकाशेन कविदयितानां पिङ्गलशास्त्रार्थवृत्तविधिरुज्जह्रे॥ M : इति साधुना यति सार्धी न्नूनामिव यादवप्रकाशेन। कविदयितानां etc. ; S : साधुनापि यादवप्रकाशेन। कविदयितानां पिङ्गलविधिः शास्त्रादुज्जहार॥